पञ्चविंशतितत्त्वज्ञो यत्र तत्राश्रमे रत' ।
जटी मुण्डी शिखी वाऽपि मुच्यते नात्र सशयः ॥ इति ।

मोक्षश्च प्रकृतिपुरुषयो[3B]र्विभाग' । प्रत्यक्षानुमानशब्दानि त्रीणि प्रमाणानि । अत्र चायं विचारः । यद्यचेतना प्रकृतिस्तर्हि ततो बोधरूपा बुद्धि' कथमुत्पद्यते । अथ पुरुषाधिष्ठितेति प्रकृतिर्बुद्धिं जनयति तर्हि सा चेतनरूपा बुद्धिः पुरुषधर्मः प्रकृतिधर्मो वा ? पुरुषधर्मश्चेत् कथ प्रकृतित उत्पत्तिः । प्रकृतिधर्मश्चेत् कथं जडरूप-प्रकृतेर्ज्ञानरूपबुद्धिधर्म', विरोधात् । न हि सूर्याज्जायमानः प्रकाशस्तमसो धर्म इति वक्तुं शक्यम् । किञ्च, यद्यकर्ता पुरुषस्तर्हि धर्ममधर्मं करिष्यामीति अध्यवसायं को विधत्ते । प्रकृतिश्चेन्न, तस्या अचेतनत्वात् । पुरुषश्चेन्न, तस्याकर्तृकत्वेन संमतत्वात् । ततोऽनादिः संसारोऽनादिः कर्मबद्धो जीव इति तत्त्वम् । " न कदाचि-दनीदृशं जगत्" इति वचनप्रामाण्यात् । किञ्च, क्रियां विना तत्त्वज्ञानमात्रेण न हि कस्यापि मोक्षः । भुक्तिक्रियां विना तज्ज्ञानेन तृप्तेरयोगात् । उक्तं च—

क्रिया फलप्रदा पुंसां न ज्ञान केवलं क्वचित् ।
न हि स्त्रीभक्ष्यभोगज्ञो ज्ञानादेव सुखी भवेत् ॥

नैयायिकमते सृष्टिसहारकारी नित्य' सर्वज्ञाता व्यापक' शिवो देवः । प्रत्य-क्षानुमानोपमानागमाश्चत्वारि प्रमाणानि । प्रमाण-प्रमेय-सशय-प्रयोजन-दृष्टान्त-सिद्धान्ता-वयव-तर्क-निर्णय-वाद-जल्प-वितण्डा-हेत्वाभास-छल-जाति-निग्रहस्थानानीति षोडश-तत्त्वानि । एतेषां च परिज्ञानान्मोक्षावाप्ति' । नित्यसंवेद्यमानेन सुखेन विशिष्टात्य-न्तिकी दु'खनिवृत्ति' पुरुषस्य मोक्ष इति । एवं चैते पृच्छया' । ननु नित्यः सन् शिव' सृष्टिसंहारावेकेन स्वभावेन विधत्ते स्वभावभेदेन वा ? । तत्र न तावदेकस्वभावे-नैवेति वक्तुं शक्यम् । सृष्टिसंहारस्वभावयोः प्रद्योतान्धकारयोरिवातीवविरुद्धत्वात् । स्वभावान्तरेण चेत् तदा न नित्य' । स्वभावभेदेनाप्रच्युतानुत्पन्नस्थिरैकस्वभावस्य नित्यलक्षणस्य व्याघातात् । अथ नित्य एव भगवान् इच्छावशात् सृजति संहरति [4A]चेति । न, काम-क्रोध-लोभ-दम्भ-गर्व-हर्षरूपोर्मिषट्करहितस्येच्छाया अप्य-सम्भवात् । किञ्च, सर्वज्ञोऽसौ स्वद्वेषिण किं सृजति ? । न हि शुद्धमार्गोच्छेदाय प्रेक्षावान् प्रवर्तते । अथ पूर्वमद्वेषिण' सृष्टा' पश्चाद् द्वेषिणो जायन्ते, तर्हि नासौ सर्वज्ञोऽनागततद्द्वेषभावाज्ञानात् । तथा यदि ईश्वरकर्तृकं जगत्[1] तदा किंकर्तृक[2]

१ ईश्वर कर्ता अस्य जगत । तत् ईश्वरकर्तृकम् । २ क कर्ता अस्य ईश्वरस्य स किंकर्तृक ईश्वर ।

इश्वर इत्यपि चिन्त्यम् । अथानादिनिधनो भगवान् स्वभावसिद्ध इति नान्यकर्तृक-स्तर्हि विश्वमपि तथैव स्वभावसिद्धमिति वदता किं वक्त्रं वक्रीस्यात् । किञ्च, नित्यस्य शिवस्य एका मूर्तिस्त्रयो भागा ब्रह्मविष्णुमहेश्वरा इत्यपि न घटते । राजसादिपृथग्गुणस्य भागत्रयस्य एकत्वनित्यत्वानुपपत्ते । तथा यद्यसौ सर्वज्ञो व्यापकश्च तदा यत्र जीवस्तत्र शिवः, "सर्वं विष्णुमयं जगद्वा" इति वचनाद्यथा सर्वे-जन्तूनां व्याप्यत्वं तथा सर्वज्ञत्वमपि किं न स्यात् । अन्यच्च, शिवमयत्वे विष्णुमय-त्वे वा जगत आराध्याराधकादि-मुक्तामुक्तादिव्यवस्थाऽपि विशीर्येत । तस्माद् एतानि वाक्यानि—

एक एव हि भूतात्मा देहे देहे व्यवस्थित ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ [ ब्रह्मबिन्दु उपनिषद् १२ ]

'यादृक् पिण्डे तादृग् ब्रह्माण्डे' इत्यादीनि च शिवादिष्विव सर्वभूतेष्वदुष्टधीप्र-तिपादकानि मन्तव्यानि । न चायं शिव पारदवत् खण्डतामवाप्य नानाभूतेषु चेष्टते । 'नैनं छिन्दन्ति शस्त्राणि' इति [भगवद्गीता २.२३] वचनाज्जीवस्य: खण्डत्वायोगात् । नापि निजांशान्नानारूपतया व्यापार्य विचित्रं चेष्टते इति वाच्यम् । यतस्तेंऽशा-स्ततो भिन्ना वाऽभिन्ना वा स्युः । भिन्नाश्चेत् खण्डतादोष । अभिन्नाश्चेदेकस्मिन् सुखिनि दुःखिनि वा सर्वेऽपि सुखिनो दुःखिनो वा स्यु । तस्मान्निरञ्जन सृष्टि-संहारानधिकारी सर्वज्ञ परमपदस्थ शिव इति । उक्तं च—

स्वरूपैकप्रतिष्ठान परित्यक्तोऽखिलैर्गुणै ॥
ऊर्मिषट्काऽतिग[1] रूपं तदाहुर्मनीषिण. ।
ससारबन्धनाधीनक्लेशदुःखाद्यदूषितम् ॥ इत्यादि [न्यायमञ्जरीनवमाह्निके]

अन्यत्राप्युक्तम्—

न स्वर्धुनी न फणिनो न कपालदाम
नेन्दो कला न गिरिजा न जटा न भस्म ।
यत्रास्ति किञ्चिदपि नान्यदुपास्महे तद्—
रूप पुराण[2]मुनिशीलित[3]मीश्वरस्य ॥

वैशेषिकाणामपि देव शिव एव । द्रव्य-गुण-कर्म-सामान्य-विशेष-समवाया षट् पदार्था. । प्रत्यक्षानुमाने द्वे प्रमाणे । नवाना [4 B] बुद्धि-सुख-दुःखेच्छा-द्वेष-प्रयत्न-धर्माधर्म-सस्काररूपविशेषगुणानामत्यन्तोच्छेदे मोक्ष इति । ते चैवं

१ अतिक्रान्त । २ जीर्ण । ३ सेवित ।

पर्यनुयोज्या[1] । ननु आगमाः प्रमाणमप्रमाणं वा । यद्यप्रमाणं कथं तर्हि आगमबलेन षट्पदार्थादिप्ररूपणा प्रमाणीक्रियते । अथ प्रमाणं तदा कथं द्वे एव प्रमाणे ? । तस्मादागमार्थापत्त्यादीन्यपि प्रमाणानि मन्तव्यानि । अन्यथा, सर्वव्यवहारलोपात् । किञ्च, विशेषगुणोच्छेदे मोक्षस्तदा मुक्तजीवस्य सर्वज्ञानसुखयोरभावादाकाशाद्यजीवैः सह मनागपि नो भेदः । अतस्तत्त्वज्ञानादिना मोक्षमवाप्य भवन्मते जीवैरजीवैर्भाव्यं [इति] लाभमिच्छतो मूलक्षतिः । अन्यच्च । यथाऽभ्रच्छि-(च्छ)न्नादित्यस्य शनैः शनैरभ्रापगमे प्रकाश: स्पष्टस्पष्टतरो भवन् सर्वाभ्रापगमे सर्वथा स्पष्ट एव स्यादेवं कर्माच्छादितस्य जीवस्य शनैः शनैः कर्मक्षये स्फुटस्फुटतरीभवज्ज्ञानं मोक्षक्षणे सर्वकर्मक्षये सम्पूर्णं केवलज्ञानमेव जायते, न पुनः सर्वथा ज्ञानोच्छेद इति । किञ्च, परमात्मस्वरूपं पश्यतो योगिनो यथा यथा विषयोपरमस्तथा[2] तथा परमानन्दसुखं बहुबहुतरमेव दृश्यते ततो यदा मोक्षक्षणे सर्वविषयोपरमस्तदा सर्वोत्तमं परमानन्दसुखं जायमानं केन निवार्यते । उक्तं च न्यायसारसूत्रे—

सुखमात्यन्तिकं यत्र बुद्धिग्राह्यमतीन्द्रियम् ।
तं वै मोक्षं विजानीयाद् दुष्प्रापमकृतात्मभि[3] ॥१

श्रीजैनदर्शने रागद्वेषविनिर्मुक्तः सर्वज्ञो महोदयी भगवान् जिनो देवः । जीवाजीवादीनि नवतत्त्वानि । प्रत्यक्षपरोक्षलक्षणं प्रमाणद्वयम् । अनन्तधर्मात्मकं स्याद्वादक्रोडीकृतं सर्वं वस्तु प्रमाणविषयः । सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग: । अत्र चैवं विचार: । ननु सम्यग्दर्शनज्ञानचारित्राणि व्यस्तानि वा समस्तानि वा व्यस्तसमस्तानि वा मोक्षमार्ग इति त्रयी गतिः । तत्र न व्यस्तानि यतो यथावस्थितजीवादिनवतत्त्वानां विस्तराद्वा संक्षेपाद्वाऽवबोधो ज्ञा[5 A]नम्, श्रद्धानं च दर्शनं बहूनामपि भूतं भवति भविष्यति च । न च ते चारित्रं विना मोक्षं याता यान्ति यास्यन्ति च । चारित्रमपि सर्वसावद्यत्यागलक्षणमागमोक्तत्वादभव्यानामपि भवति । न च ते सिद्धा: सिद्ध्यन्ति सेत्स्यन्ति च । तस्मान्न व्यस्तानि तानि मोक्षमार्गः । नापि समस्तानि, श्रीभरतचक्रवर्त्यादीनां राज्यं कुर्वतामेव मोक्षप्राप्तेः । नापि व्यस्तसमस्तानि धर्मतीर्थस्याप्रवृत्ततया स्वतः परतो वा ज्ञानादीनामसम्भवेऽपि भगवन्मातृमरुदेवादीनां मोक्षस्य लाभात् । तस्मात् सर्वशुद्धशुभपरिणामपरिणत आत्मैव सम्यग्ज्ञानादिरत्नत्रयरूपो ज्ञातव्यः । स एव मोक्षश्चेति । उक्तं च—

आत्मैव दर्शनज्ञानचारित्राण्यथवा यतेः ।
यत् तदात्मक एवैष शरीरमधितिष्ठति ॥

१ पृच्छया । २ निवृत्ति । ३ मूर्खै ।

अयमात्मैव ससारकषायेन्द्रियनिर्जितः ।
तमेव तद्विजेतारं मोक्षमाहुर्मनीषिणः ॥

अत एव नामादिकदाग्रहं मुक्त्वा गुणोत्कीर्तनद्वार( रे )णैव देवगुरुधर्मतत्त्वानि सर्वैरपि तत्त्वज्ञै' प्रमाणीकृतानि । तद्यथा– वीतरागः परमात्मस्वरूपो भगवान् अर्हन् श्रीसर्वज्ञो देव' । ज्ञानतपोभ्या[१] पात्रतामापन्न सयमी गुरु' । सर्वज्ञभाषितो दयादिमूलो धर्म' । इत्येतत्त्रयस्यैव ज्ञानश्रद्धाने सम्यक्त्वम् । तदुक्तं श्रीविष्णुपुराणे [६. ६. १]—

स्वाध्यायसयमाभ्या स दृश्यते पुरुषोत्तम' ।
तत्राप्तिकारणं ब्रह्म तदेतदिति पठ्यते ॥

तत्र[६.५.६६] देवविषये—

यत् तदव्यक्तमजरमचिन्त्यमजमव्ययम् ।
अनिर्दिश्यस्वरूपं च पाणिपादाद्यसाम्प्रतम् ॥
तदेव भगवद्वाच्यं स्वरूपं परमात्मन' ।
वाचको भगवच्छब्दस्तस्याद्यस्याक्षयात्मनः ॥ [६.५.६८]
पर' पराणा सकला न यत्र
क्लेशादय' सन्ति पराऽपरेशे ।
सर्वेश्वर' सर्वग' सर्ववेत्ता
समस्तशक्ति' परमेश्वराख्यः ॥
स ज्ञायते येन सदस्तदोष'
सिद्धः परो निर्मलरूप एक. ।
तज्ज्ञानमज्ञानमतोऽन्यदुक्तं
स दृश्यते वाऽप्यथ गम्यते वा ॥

विश्वकर्मणाप्युक्तम्—

इन्द्रियैर्न जितो नित्यं केवलज्ञाननिर्मलः । [5B]
पारं गतो भवाम्भोधेर्यो लोकान्ते वसत्यलम् ॥
ज्योतीरूपेण यस्तत्र पुंरूपेणात्र वर्तते ।
रागद्वेषव्यतिक्रान्तः स एष परमेश्वरः ॥२॥

बौद्धैरप्युक्तम्—

भग्न मारवलं येन चूर्णितं भवपञ्जरम् ।
निर्वाणपदमारूढं तं बुद्ध प्रणमाम्यहम् ॥

---

१. ज्ञानमध्ये दर्शन ज्ञातव्यम् ।

योगशास्त्रेऽप्युक्तम्—

सर्वज्ञो जितरागादिदोषस्त्रैलोक्यपूजितः ।
यथास्थितार्थवादी च देवोऽर्हन् परमेश्वरः ॥

योगसारेऽपि—

निष्कलो निर्ममः शाम्भः सर्वज्ञः शुभदः प्रभुः ।
स एव भगवानेको देवो ज्ञेयो निरञ्जनः ॥

व्योमरूपो जगन्नाथः क्रियाकालगुणोत्तरः ।
संसारसृष्टिनिर्मुक्तः सर्वतेजोविलक्षणः ॥
केवलज्ञानसम्पूर्णः केवलानन्दसंश्रितः ।
केवलध्यानगम्यश्च देवेशः सर्वदर्शने ॥

अतस्तत्त्वमिदम्—

भवबीजाङ्कुरजनना रागाद्याः क्षयमुपागता यस्य ।
ब्रह्मा वा विष्णुर्वा हरो जिनो वा नमस्तस्मै ॥ [महादेवस्तोत्र, ४४]

ज्ञानतपःपात्रं संयमी गुरुः । उक्तं च—

न विद्यया केवलया तपसा वाऽपि पात्रता ।
यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रचक्षते ॥ [याज्ञवल्क्यस्मृति, १.२००]

तथा—

ये क्षान्तदान्ताः श्रुतपूर्णकर्मा
जितेन्द्रियाः प्राणिवधान्निवृत्ताः ।
परिग्रहे सङ्कुचिताग्रहस्ता–
स्ते ब्राह्मणास्तारयितुं समर्थाः ॥१॥[व्यासस्मृति, ४. ५८]

तथा—

विमुक्तं सर्वसङ्गेभ्यो मुनिमाकाशवत् स्थितम् ।
स्वस्थमेकं चरं शान्तं तं देवा ब्राह्मणं विदुः ॥१॥
अहेरिव गणाद्भीतः सन्मानान्नरकादिव ।
कुणपादिव च स्त्रीभ्यस्तं देवा ब्राह्मणं विदुः ॥२॥
जीवितं यस्य धर्मार्थं धर्मा(र्मो) ज्ञानार्थमेव च ।
अहोरात्राश्च पुण्यार्थं तं देवा ब्राह्मणं विदुः ॥३॥ शान्तिपर्वणि ॥

तथा—

अनग्निमनिकेतं तमेकाहावसथाश्रयम्[1] ।
विमुक्तसङ्गं तं दृष्ट्वा प्रोचुः स्वपितरो मुनिम् ॥१॥
—मार्कण्डेयपुराणे [८७.२] रुचिस्तोत्रे ॥

तथा—

अहिंसकः सत्यवक्ता सर्वसङ्गपराङ्मुखः ।
ब्रह्मचारी सवैराग्यो भिक्षुर्बौद्धमते गुरुः ॥
अतः सारमिति—
महाव्रतधरा धीरा भैक्ष्यमात्रोपजीविनः ।
सामायिकस्था धर्मोपदेशका गुरवो मताः ॥१॥[त्रिशष्टि.श.पु.,
२.३.८९६]

तथा क्षमा-मार्दवार्जव-मुक्ति-[6A]तप'-संयम-सत्य-शौचाकिञ्चन्य-ब्रह्मचर्यरूपः सर्वज्ञप्रणीतो दशविधो धर्मः । तथाहि—

अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
दानं दया दमः क्षान्तिः सर्वेषां धर्मसाधनम् ॥१॥
—याज्ञवल्क्यस्मृतौ[१.१२२] ॥

तथा—

अहिंसा ह्येव सर्वेभ्यो धर्मेभ्यो ज्यायसी मता ॥
यदि यज्ञांश्च वृक्षांश्च यूपांश्चोद्दिश्य मानवाः ।
वृथा खादन्ति मांसानि नैष धर्मः प्रदर्श्यते ॥
सुरा मत्स्या मधु मासमासवाः कृशरौदने ।
धूर्तैः प्रवर्तितं ह्यतन्नैतद्वेषु कल्पितम् ॥
कामान्मोहाच्च लोभाच्च लोक्यमेत(लोके ह्येत)त् प्रवर्तितम् ।
विष्णुमेव हि जानन्ति सर्वयज्ञेषु ब्राह्मणाः ॥
पायसैः सुमनोभिश्च तस्यापि यजनं स्मृतम् ।
याज्ञियाश्चैव ये वृक्षा वेदेषु परिकल्पिताः ॥
यच्चापि किञ्चित् कर्तव्यमन्यच्चोक्षैः सुसस्कृतम् ।
महासत्त्वैः शुद्धभावैः सर्वं देवार्हमेव तत् ॥ इति श्रीमहाभारते शान्तिपर्वणि तुलाधारजाजलिसवादे ।

---

१. मुद्रिते तु '°हारमनाश्रमम्' इति पाठः ।

तथा—

सत्यां वाचमहिंस्रां च वदेदनपवादिनीम् ।
कल्कोऽपेतामपरुषामनृशंसामपैशुनाम् ॥१॥

तथा—

ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ।
वाङ्मनोनियमः साम्यं मानसं तप उच्यते ॥

तथा—

आनृशस्यं क्षमा शान्तिरहिंसा सत्यमार्जवम् ।
अद्रोहो नातिमानश्च ह्रीस्तितिक्षा दमस्तथा ।
पन्थानो ब्रह्मणस्त्वेते एतैः प्राप्नोति यत्परम् ॥

—शान्तिपर्वणि ।

इत्येवं सर्वदर्शनसंमतदेवगुरुधर्मरूपस्य तत्त्वत्रयस्य सम्यक्स्वरूपं परिज्ञाय शेषमशेषकदाग्रहं मुक्त्वा प्रेक्षावता सर्वज्ञेयसारमेतत्त्रयमेव ज्ञेयं श्रद्धेयं समनुष्ठेयं चेति यथा सम्पद्यते सकलकल्याणाऽभ्युदयसमृद्धय[1] । कृतिरियं श्रीमदञ्चलगच्छेशश्रीमेरुतुङ्गसूरीन्द्राणाम् ॥छ॥श्री॥छा॥श्री॥शुभं भत(भवतु) ॥छा॥छा॥श्री॥ इति षट्दर्शननिर्णय[ः।] सर्वसङ्ख्या ॥१८१॥४॥

१ माया

अज्ञातकर्तृकम्

# ॥ पञ्चदर्शनखण्डनम् ॥

ॐ। नैयायिकदर्शने तावत् प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्ता-ऽवयव-तर्क-निर्णय-वाद—जल्प-वितण्डा-हेत्वाभास-छल-जाति-निग्रह-स्थापना-(स्थाना)न्येते षोडशपदार्था अभिहिताः।

तत्र हेयोपादेयप्रवृत्तिरूपतया येन पदार्थपरिच्छत्तिः क्रियते तत् प्रमीयतेऽनेनेति प्रमाणम्। तच्च प्रत्यक्षानुमानोपमानशाब्दभेदाच्चतुर्धा। तत्रेन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकमिति प्रत्यक्षम्। तत्रेन्द्रियार्थयोर्यः सम्बन्धस्तस्मात् यदुत्पन्नं—नाभिव्यक्तं; ज्ञानं—न सुखादिकम्; अव्यपदेश्यमिति—व्यपदेश्यत्वेन शाब्दत्वप्राप्तेः; अव्यभिचारि—न द्विचन्द्रज्ञानवद् व्यभिचरतीति; व्यवसायात्मकमिति निश्चयात्मकं प्रत्यक्षम्।

तत्रास्य प्रत्यक्षता न युद्ध्यते। तथाहि—यत्रात्मा अर्थग्रहणं प्रति साक्षाद् व्याप्रियते तदेव प्रत्यक्षम्। तच्चाऽवधि-मनःपर्याय-केवलात्मकम्। एतच्च परोपाधिद्वारेण प्रवृत्तेरनुमानवत् परोक्षमित्युपचारप्रत्यक्षं तु स्यात्, नोपचारस्तत्त्वचिन्तायां व्याप्रियत इति।

अनुमानमपि पूर्ववच्छेषवत्सामान्यतोदृष्टमिति त्रिधा। तत्र कारणात् कार्यानुमानं पूर्ववत्। कार्यात् कारणानुमानं शेषवत्। सामान्यतोदृष्टं तु चूतमेक विकशि(सि)तं दृष्ट्वा पुष्पिताश्चूता जगतीति। यदि वा, देवदत्तादौ गतिपूर्विकां स्थानात् स्थानान्तरावाप्तिं दृष्ट्वा आदित्येऽपि गत्यनुमानमिति। तत्राप्यन्यथानुपपत्तिरेव गमिका, न कारणादिकम्। तया विना कारणस्य कार्यं प्रति व्यभिचारात्। यत्र तु सा विद्यते तत्र कार्यकारणादिव्यतिरेकेणापि गम्यगमकभावो दृष्टः तद्यथा—भविष्यति शकटोदयः कृत्तिकादर्शनादिति। तदुक्तम्—

अन्यथाऽनुपपन्नत्वं यत्र तत्र त्रयेण किम्।
नान्यथाऽनुपपन्नत्वं यत्र तत्र त्रयेण किम्॥ [ त्रिलक्षणकदर्थन ]

अपि च प्रत्यक्षस्याप्रामाण्ये तत्पूर्वकस्यानुमानस्याप्यप्रामाण्यमिति।

प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमान 'यथा गौर्गवयस्तथा'। अत्र च संज्ञासञ्ज्ञिसंबन्धप्रतिपत्तिरुपमानार्थस्तथापि सिद्धायामन्यथानुपपत्तौ अनुमानस्य लक्षणत्वेन तत्रैवान्तर्भावात् पृथक्प्रमाणत्वमनुपपन्नमेव। अथ नास्त्यन्यथानुपपत्तिस्ततो व्यभिचारादप्रमाणतोपमानस्य॥

शाब्दमपि न सर्वं प्रमाणम् । किं तर्हि ? आप्तप्रणीतमेव । तस्यैवाऽऽगमस्य प्रामाण्यात् । न चार्हे(र्ह)द्व्यतिरेकेणापरस्याऽऽप्तता युक्तियुक्ता इत्येतच्चान्यत्र निर्लोठितमेव ।

सर्वमप्येतत्प्रमाणमात्मनो ज्ञानम्, ज्ञानं चात्मगुणः पृथक्पदार्थतयाभ्युपगन्तु न युक्तो रूपरसादीनामपि पृथक्पदार्थतापत्तेः । अथ प्रमेयग्रहणेनेन्द्रियार्थतया तेऽप्याश्रिताः । सत्यमाश्रिताः, न तु युक्तियुक्ता(क्ताः) । तथाहि--द्रव्यव्यतिरेकेण तेषामभावात् तद्ग्रहणे तेषामपि ग्रहण सिद्धमेवेति न युक्तं पृथगुपादानम् ।

प्रमेयं त्वात्म-शरीरेन्द्रिया-ऽर्थबुद्धि-मन'-प्रवृत्ति-दोष प्रेत्यभाव-फल-दुःखाऽपवर्गाः । तत्र आत्मा सर्वस्य द्रष्टोपभोक्ता इच्छा-द्वेप-प्रयत्न-सुख-दु'ख-ज्ञानानुमेयः । स च जीवपदार्थतया गृहीत एवास्माभिरिति । शरीरं तु तस्य भोगायतनम् , भोगसाधनानीन्द्रियाणि, भोक्तव्या इन्द्रियार्थाः । एतदपि शरीरादिकं जीवाजीवग्रहणेनोक्तमस्माभिरिति । उपयोगो बुद्धिरित्येतच्च ज्ञानविशेषः । स च जीवगुणतया जीवोपादानतयोपात्त एव । सर्वविपयमन्तःकरणं युगपत् ज्ञानानुपपत्तिलिङ्गं मन'; तदपि द्रव्यमनः पौद्गलिकमजीवग्रहणेन गृहीतं भावमनस्त्वात्मगुणत्वाज्जीवग्रहणेनेति । आत्मनः सुखदु'खसंवेदनायां या निर्वर्त्तनकरणं प्रवृत्तिः सापि पृथक्पदार्थतया नाभ्युपगन्तुं युक्ता । तथाहि — प्रवृत्तिरित्यात्मेच्छा, सा चात्मगुण एवात्माभिप्रायतया ज्ञानविशेषत्वात् । आत्मानं दूषयतीति दोष' । तद्यथा--अस्यात्मनो नेदं शरीर[म]पूर्वम् अनादित्वादस्य, नाप्यनुत्तरम् अनन्तत्वात् संततेरिति योऽयम् आत्मनोऽध्यवसाय' स दोषः, रागद्वेषमोहादिको वा दोपः । अयमपि दोपो जीवाभिप्रायतया तदन्तर्भावीति न पृथग्वाच्यः । प्रेत्यभावः परलोकसद्भावः । अयमपि ससाधनो जीवाजीवग्रहणेनोपात्त एव । फलमपि सुखदुःखोपभोगात्मकम् । तदपि जीवगुण एवान्तर्भवतीति न पृथगुपदेष्टव्यमिति । दुःखमित्येतदपि विविधवाधनायोगरूपमिति न फलादतिरिच्यते । जन्ममरणप्रबन्धोच्छेदरूपतया सर्वदुःखप्रहाणलक्षणो मोक्षः । स चास्माभिरुपात्त एवेति ।

किमित्यनवधारणात्मकः प्रत्ययः संशय. । असावपि निर्णयज्ञानवदात्मगुण एवेति ।

येन प्रयुक्त' प्रवर्तते तत् प्रयोजनम् । तदपीच्छाविशेषत्वादात्मगुण एव ।

अविप्रतिपत्तिविषयापन्नोऽर्थो दृष्टान्त' । असावपि जीवाजीवयोरन्यतरो न, एतावताऽस्य पृथक्पदार्थताऽयुक्ता अतिप्रसङ्गात् । अवयवग्रहणेन च तस्योत्तरत्रग्रहणादिति ।

सिद्धान्तश्चतुर्विध । तद्यथा—सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः । यथा स्पर्शनादीनीन्द्रियाणि; स्पर्शादय इन्द्रियार्था.; प्रमाणैः प्रमेयस्य ग्रह-

णमिति ॥१॥ समानतन्त्रे सिद्धः प्रतितन्त्रेऽसिद्ध' प्रतितन्त्रसिद्धान्तो यथा साङ्ख्यानां नासत आत्मलाभः । न च सत. सर्वथा विनाश इति । तथा चोक्तम्— 'नासतो जायते भावो नाभावो जायते सत'' इति[1] ॥२॥ यत्सिद्धावन्यस्यानुषङ्गेण सिद्धिः सोऽधिकरणसिद्धान्तो यथा इन्द्रियव्यतिरिक्तो ज्ञाताऽऽत्मास्ति दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् । तत्राऽऽनुषङ्गिणोऽर्था इन्द्रियनानात्वम्; नियतविषयाणीन्द्रियाणि; स्वविषयग्रहणलिङ्गानि च ज्ञातुर्ज्ञानसाधनानि, स्पर्शादिगुणव्यतिरिक्त द्रव्यं गुणाधिकरणम्; अनियप-(त)विषया चेतना इति पूर्वार्थसिद्धावेतेऽर्था' सिध्यन्ति । नैतैर्विना पूर्वार्थः सभवीति ॥३॥ अ[प]रीक्षितार्थाभ्युपगमात् तद्विशेषपरीक्षणम् अभ्युपगमसिद्धान्त. । तद्यथा—किं शब्द इति विचारे कश्चिदाह द्रव्यं शब्दः, स तु किं नित्योऽथानित्य इत्येवं विचारः ॥४॥ स चायं चतुर्विधोपि सिद्धान्तो न ज्ञानविशेषादतिरिच्यते । ज्ञानविशेषस्य चात्मगुणत्वाद् गुणस्य च गुणिग्रहणेन ग्रहणान्न पृथगुपादानमिति ।

अथावयवा' प्रतिज्ञा-हेतूदाहरणोपनय-निगमनानि । तत्र साध्यनिर्देशः प्रतिज्ञा । यथाऽनित्यः शब्दो नित्यो वेति । हिनोति गमयति प्रतिज्ञातमर्थमिति हेतु' । तद्यथा—उत्पत्तिधर्मकत्वात् । साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त' उदाहरणम् यथा घट इति । वैधर्म्योदाहरणं यदनित्यं न भवति तदुत्पत्तिमदपि न भवति यथाकाशमिति । तथा न तथेति वा पक्षधर्मोपसहार उपनयस्तद्यथाऽनित्यः शब्दः, कृतकत्वात्, घटवत्, तथा चायम्; अनित्याभावे कृतकत्वमपि न भवति, आकाशवत्, न तथाऽयमिति । प्रतिज्ञाहेत्वो' पुनर्वचनं निगमनम् तस्मादनित्य इति । तत्राऽमी पञ्चाप्यवयवाः ।

यदि शब्दो गडुभाव (?) ततः शब्दस्य पौद्गलिकत्वात् पुद्गलानां चाजीवग्रहणेन ग्रहणान्न पृथगुपादानं वाच्यम् । अथ तज्जं ज्ञान तनो(तो) जीवगुणत्वाज्जीवग्रहणेनैवोपादानमिति । ज्ञानविशेषपदार्थताभ्युपगमे च पदार्थबहुत्वं स्यात् । अनेकप्रकारत्वात् ज्ञानविशेषाणामिति ।

संशयादूर्ध्वं भवितव्यताप्रत्ययः सदर्थपर्यालोचनात्मकस्तर्को यथा भवितव्यमत्र स्थाणुना पुरुषेण वेति. अयमपि ज्ञानविशेष एव । न च ज्ञानविशेषाणां ज्ञातुरभिन्नाना पृथक्पदार्थताकल्पन(न) समनुजानते विद्वांसः ।

सशयतर्काभ्यामुत्तरकालभावी निश्चयात्मक' प्रत्ययो निर्णयः, अयमपि प्राग्वत् न ज्ञानादतिरिच्यते । किञ्चास्य निश्चयात्मकतया प्रत्यक्षादिप्रमाणान्तर्भावात् न पृथग्निर्देशो न्याय्य इति ।

तिस्र' कथा [?] वादो जल्पो वितण्डा चेति । प्रमाणतर्कसाधनोपालम्भ' सिद्धान्ताविरुद्ध' ' पक्षप्रतिपक्षपरिग्रहो वाद । स च तत्त्वज्ञानार्थं शिष्याचार्ययोर्भ-

---

1 तुल्ना—नासतो विद्यते भावो नाभावो विद्यते सत । गीता २ १६

वति । स एव विजिगीषुणा सार्धं छल-जाति-निग्रहस्थानसाधनोपालम्भो जल्पः । स एव प्रतिपक्षस्थापनाहीनो वितण्डेति ।

तत्रासां तिसृणामपि कथानां भेद एव नोपपद्यते यतस्तत्त्वचिन्तायां तत्त्व-निर्णयार्थं वादो विधेयो न च छलजात्यादिना तत्त्वावगमः कर्तुं पार्यते । छलादिकं हि परवञ्चनार्थमुपन्यस्यते । न च तेन तत्त्वावगतिरिति । सत्यपि भेदे नासां पदार्थता यतो यदेव परमार्थतो वस्तुतृ(वृ)त्त्या वस्त्वस्ति तदेव पदार्थतयाभ्युपगन्तुं युक्तम् । वादास्तु पुरुषेच्छावशेन भवन्तोऽनियतार्था वर्तन्ते । न तेषा पदार्थतेति । किञ्च, पुरुषेच्छाविधायिनो वादाः कुक्कुटलवकादिष्वपि पक्षप्रतिपक्षपरिग्रहेण भवन्त्यतस्तेषा-मपि तत्त्वप्राप्तिः स्यात् । न चैतदिष्यत इति ।

असिद्धाऽनैकान्तिकविरुद्धा हेत्वाभासाः । हेतुवदाभासन्त इति हेत्वाभासाः । तत्र सम्यग्हेतूनामपि तत्त्वव्यवस्थितिः, किं पुनस्तदाभासानाम् । तथाहि—इह यन्नियतं वस्तु अस्ति तदेव तत्त्वं भवितुमर्हति, हेतवस्तु क्वचिद्वस्तुनि साध्ये हेतवः क्वचिदहेतव इत्यनियतास्त इति ।

अथ छलम् अर्थविघातोऽर्थविकल्पोपपत्त्येति । तत्रार्थविशेषे विवक्षितेऽभिहिते वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम्, यथा नवकम्बलोऽयं देवदत्तः; अत्र नवः कम्ब-लोऽस्येति वक्तुरभिप्रायः, विग्रहे च विशेषो न समासे । तत्रायं छलवादी—नव कम्बला अस्येत्येतद्भवताऽभिहितमिति, न चायं तथेत्येवं प्रतिषेधयति । तत्र छलमि-त्यसदर्थाभिधानम् । तद्यदि छलं न तर्हि तत्त्वम्, तत्त्वं चेद् न तर्हि छलम् । परमा-र्थरूपत्वात् तत्त्वस्येति । तदेवं छलं तत्त्वमित्यतिरिक्ता वाचोयुक्तिः ।

दूषणाभासास्तु जातयः । तत्र सम्यग्दूषणस्यापि न तत्त्वव्यवस्थितिरनियत-त्वात् । अनियतत्व च यदेवैकस्मिन् सम्यग्दूषण तदेवान्यत्र दूषणाभासम्, पुरुषशक्त्य-पेक्षत्वाच्च दूषण-दूषणाभासव्यवस्थितेरनियतत्वमिति । कुत पुनर्दूषणाभासरूपाणां जातीनां तत्त्वत्वं वास्तवम्; अवास्तवत्वात् तासामिति ।

वादकाले वादी प्रतिवादी वा येन निगृह्यते तत् निग्रह स्थानम् । तच्च वादि-नोऽसाधनाङ्गवचनम्, प्रतिवादिनस्तु असदद्दोषोद्भावन विहाय यदन्यदभिधीयते नैयायिकै-स्तत्प्रलापमात्रमिति । तच्च प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोध इत्यादिकम् । एतच्च विचार्यमाणं न निग्रहस्थान भवितुमर्हति । तस्योक्तनीत्या सदोषत्वादिति । तदपि च पुरुषस्यैवापराधं कर्तुमलं न तु तत्त्वं भवितुमर्हति । वक्तृगुणदोषौ हि परार्थेऽनु-मानेऽधिक्रियेत न तु तत्त्वमिति । तदेवं न नैयायिकैरुक्तं तत्त्व तत्त्वेनाश्रयितुं युज्यते तस्योक्तनीत्या सदोषत्वादिति ।

नापि वैशेषिकोक्तं तत्त्वमिति। तथाहि—द्रव्य-गुण-कर्म-सामान्य-विशेष-समवाया-स्तत्त्वमिति। तत्र पृथिव्यप्-तेजोवाय्वाकाश-काल-दिगा-ऽऽत्म-मनांसीति नवद्रव्याणि। तत्र पृथिव्यप्-तेजोवायूना पृथग्द्रव्यत्वमनुपपन्नम्। तथाहि—त एव परमाणवः प्रयोगविप्र(स्र)साभ्या पृथिव्यादित्वेन परिणमन्तोऽपि न स्वकीयं द्रव्यत्वं त्यजन्ति। न चावस्थाभेदेन द्रव्यभेदो युक्तोऽतिप्रसङ्गात्। आकाशकालयोश्च अस्माभिरपि द्रव्यत्व-मभ्युपगतमेव। दिगस्त्वाकाशावयवभूताया अनुपपन्नं पृथग्द्रव्यत्वमतिप्रसङ्गदोषा-देव। आत्मनः शरीरमात्रव्यापिन उपयोगलक्षणस्याभ्युपगतमेव द्रव्यत्वमिति। मन-सश्च पुद्गलविशेषतया पुद्गलद्रव्ये अन्तर्भावः परमाणुवत्। भावमनसश्च जीवगुणत्वाद् आत्मन्यन्तर्भाव इति।

यदपि तैरभिधीयते यथा पृथिवीत्वयोगात् पृथिवीति तदपि स्वप्रक्रियामात्रमेव। यतो न हि पृथिव्या' पृथग्भूतं पृथिवीत्वमस्ति येन तद्योगात् पृथिवी भवेद् इति। अपि तु सर्वमपि यदस्ति तत्सामान्यविशेषात्मकम्। नरसिंहाकारम्(रवद्) उभयस्वभाव-मिति। तथा चोक्तम्—

नान्वयस्तद्विभेदित्वान्न भेदोऽन्वयवृत्तितः।
मृद्भेदद्वयसंसर्गवृत्ति जात्यन्तरं घटः॥
तथा न नरः सिंहरूपत्वात् न सिंहो नररूपतः।[1]
शब्दविज्ञानकार्याणां भेदाज्जात्यन्तरं हि स'॥ इत्यादि।

अथ रूप-रस-गन्ध-स्पर्शा रूपिद्रव्यवृत्तिविशेषगुणाः। तथा—सङ्ख्याः परिमा-णानि पृथक्त्वं सयोगविभागौ परत्वापरत्वे इत्येते सामान्यगुणा सर्वद्रव्यवृत्तित्वात्। तथा बुद्धि-सुख-दुःखेच्छा-द्वेष-प्रयत्न-धर्माधर्म-सस्कारा आत्मगुणा'। गुरुत्वं पृथिव्यु-दकयो'। द्रव्य(व)त्वं पृथिव्युदकाग्निषु। स्नेहोऽम्भस्येव। वेगाख्यः सस्कारामू(रो मूर्त)-द्रव्येष्वेव। आकाशगुणः शब्द इति। तत्र सङ्ख्यादयः सामान्यगुणाः रूपादिवद् द्रव्यस्वभावत्वेन परोपाधिकत्वाद् गुणा एव न भवन्ति। अथापि स्युस्तथापि गुणानां न पृथग् व्यवस्था। तत्पृथग्भावे द्रव्यस्वरूपहानेः "गुणपर्यायवद् द्रव्यम्" [तत्त्वार्थसूत्र ५. ३७]'इति कृत्वा, अतो नान्तरीयकतया द्रव्यग्रहणेनैव ग्रहणं न्याय्यमिति न पृथग्भाव'। किञ्च, तस्य भावस्तत्त्वमित्युच्यते। भावप्रत्ययश्च "यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ" इति अनेन भवति। तत्र घटो रक्त उदक-स्याहारको जलवान् सर्वै रेव घट उच्यते। अत्र घटस्य भावो घटत्वम्, रक्तस्य भावो रक्तत्वम्, आहारकस्य भाव आहारकत्वम्, जलवतो भावो जलवत्त्वम् इत्यत्र घटसामान्य-रक्तगुण-क्रिया-द्रव्यसंबन्धरूपाणां गुणाना सद्भावात् द्रव्ये पृथुबुध्नो-

---

१. तुलना—मादृश्य नरसिंहादौ युक्तं जात्यन्तरे सति। श्लो० वा० वाक्याधि० १२५। द्र० वाक्यप० २९०, तत्त्वोप० पृ० ११९।

दराद्याकारे उदकाद्याहरणक्षमे कुटकाख्ये शब्दस्य घटादेरभिनिवेशस्तत्र त्वतत्नौ। इह च रक्ताख्यः को गुणो यत्सद्भावात् कतरच्च तद् द्रव्यं यत्र शब्दनिवेशो येन च भावप्रत्ययः स्यादिति। परः—किमिदानीं रक्तस्य भावो रक्तत्वमिति न भवितव्यम् ?। आचार्य—भवितव्यम् उपचारेण। तथाहि—रक्त इत्येतत् द्रव्यत्वेनोपचर्यः। तस्य सामान्यभाव इति रक्तत्वमिति। न च उपचारस्तत्त्वचिन्तायाम् उपयुज्यते। शब्दसिद्धावेव तस्य कृतार्थत्वाद् इति। शब्दश्च आकाशगुण एव न भवति। तस्य पौद्गलिकत्वात्, आकाशस्य च अमूर्तत्वाद् इति। शेषं तु प्रक्रियामात्रम् न साधनदूषणयोरङ्गम्।

क्रियाऽपि द्रव्यसमदा(वा)यिनी गुणवत् पृथगाश्रयितुं न युक्तेति।

अथ सामान्यम्। तद् द्विधा परम् अपरं च। तत्र परं सामान्यं सत्ताख्यं द्रव्यादिपदार्थव्यापि। तथा चोक्तम्—सदिति यतो द्रव्यगुणकर्मसु सा सत्ता। अपरं च द्रव्यगुणकर्मत्वात्मकम्।

तत्र न तावत् महासत्तायाः पृथक्पदार्थता युज्यते। यतस्तस्यां यत्सदिति प्रत्ययः स किम् अपरसत्तानिबन्धन उत स्वत एव ?। तद्यदि अपरसत्तानिबन्धनस्तत्राप्ययमे[व] विकल्पोऽतोऽनवस्था। अथ स्वत एव ततः तद्वद् द्रव्यादिष्वपि स्वत एव सत्-प्रत्ययो भविष्यतीति किमपरसत्तया अजागलस्तनकल्पया विकल्पितया। किञ्च, द्रव्यादीनां सतां सत्तया सत्प्रत्ययो उत असताम् ?। तद्यदि सतां तत एव सत्प्रत्ययो भविष्यतीति किं तया। अथासतां तर्हि शशविषाणादिष्वपि सत्तायोगात् सत्प्रत्ययः स्यादिति। तथा चोक्तम्—

स्वतोऽर्थाः सन्तु सत्तावत् सत्तया किं सदात्मनाम्।
असदाय(दात्म)नस्तु नैषा स्यात् सर्वथाऽतिप्रसङ्गतः॥ इत्यादि। [लघीयस्त्रय ४०]

एतदेव दूषणम् अपरसामान्येऽपि योज्यं तुल्ययोगक्षेमत्वात्। किञ्चास्माभिरपि सामान्यविशेषरूपत्वाद्वस्तुनः कथञ्चित् तदिष्यत एवेति। तस्य कथञ्चिदव्यतिरेकाद् द्रव्यग्रहणेनैव ग्रहणम् इति।

अथ विशेषा.। ते चात्यन्तव्यावृत्तिशु(बु)द्धिहेतुत्वेन परैराश्रीयन्ते। तत्रेदं चिन्त्यते। या तेषु विशेषबुद्धिः सा नापरविशेषहेतुकाऽऽश्रयितव्याऽनवस्थाभयात्। स्वतः समाश्रयणे च तद्वत् द्रव्यादिष्वपि विशेषबुद्धिः स्यात्, किं द्रव्यादिव्यतिरिक्तैर्विशेषैरिति ?। द्रव्याऽव्यतिरिक्तास्तु विशेषा अस्माभिरपि आश्रीयन्ते सर्वस्य सामान्यविशेषात्मकत्वादिति।

एतत्तु प्रक्रियामात्रम् । तद्यथा—नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः । नित्यद्रव्याणि—चतुर्विधा परमाणवः, मुक्तात्मानः, मुक्तमनांसि चेति निर्युक्तिकत्वादपकर्णयितव्यमिति ।

समवायस्त्वयुतसिद्धानामाधाराधेयभूतानां य इह-प्रत्ययहेतुः स समवाय इत्युच्यते। असावपि नित्य एकश्चाऽऽश्रीयते । तस्य च नित्यत्वात् समवायिनोऽपि नित्या आपद्येरन् । तदनि[त्य]त्वे च तस्याप्यनित्यतापत्तिस्तदाधाररूपत्वात् तस्य । तदेकत्वाच्च सर्वेषा समवायिनामेकत्वापत्तिस्तस्य वानेकत्वमिति । किञ्चायं समवायः सम्बन्धस्तस्य [च] द्विष्ठत्वाद् [समवायिनो'] युतसिद्धत्वमेव दण्डदण्डिनोरिव । वीरणानां कटोत्पत्तौ तद्रूपतया विनाशः, कटरूपतयोत्पत्तिः, अन्वयरूपतया व्यवस्थानमिति दुग्धदध्नोरिवेति ।

एव(व) वैशेषिकमतेऽपि न सम्यक्पदार्थव्यवस्थितिः ।

साम्प्रतं साङ्ख्यदर्शने तत्त्वनिरूपणं प्रक्रम्यते। तत्र प्रकृत्यात्मसयोगात् सृष्टिरुपजायते । प्रकृतिश्च सत्त्वरजस्तमसां साम्यावस्था । ततो महान् , महतोऽहङ्कारः अहङ्काराद् एकादशेन्द्रियाणि पञ्चतन्मात्राणि [च], पञ्चतन्मात्रेभ्यः पञ्चभूतानीति । चैतन्यं पुरुषस्य स्वरूपम् । स चाकर्ता निर्गुणो भोक्तेति ।

तत्र परस्परविरुद्धानां सत्त्वादीनां गुणानां नियामकं गुणिनमन्तरेणैकत्रावस्थानं न युज्यते कृष्णसितादिगुणानामिव । न च महदादिविकारे जन्ये प्रकृतिवैषम्योत्पादने कश्चिद्धेतुस्तद्व्यतिरिक्तवस्त्वन्तरानभ्युपगमाद् आत्मनश्चाकर्तृकत्वेनाऽकिञ्चित्करत्वात् । स्वभाववैषम्याभ्युपगमे तु निर्हेतुकत्वापत्ते' नित्यं सत्त्वमसत्त्वं वा स्यादिति । उक्तं च--

नित्यं सत्त्वमसत्त्वं वा हेतोरन्याऽनपेक्षणात् ।

अपेक्षातो हि भावानां कादाचित्कत्वसंभव ॥ [प्रमाणवा० ३. ३४ ]

अपि च, महदहङ्कारौ सवेदनादभिन्नौ पश्याम. । तथाहि—बुद्धिरध्यवसाय', अहङ्कारश्चाह सुखी अहं दु खीत्येवमात्मकः प्रत्ययः, तयोश्च चिद्रूपतया आत्मगुणत्वम् न जडरूपायाः प्रकृतेर्विकारावेताविति ।

अपि च, येयं तन्मात्रेभ्यो भूमोतो(भूतो)त्पत्तिरिष्यते तद्यथा गन्धतन्मात्रात् पृथिवी, रसतन्मात्रादाप', रूपतन्मात्रात्तेजः, स्पर्शतन्मात्राद्वायुः, शब्दतन्मात्रादाकाशमिति—साऽपि न युक्तिक्षमा; यतो यदि बाह्यभूताश्रयेणैतदभिधीयते तदयुक्तम्, तेषा सर्वदा भावात् न कदाचिदनीदृश जगदिति कृत्वा । अथ प्रतिशरीराश्रयणादेतदुच्यते—तत्र किल त्वगस्थिकठिनलक्षणा पृथ्वी, श्लेष्माऽसृग्द्रवलक्षणा आपः, पक्तिलक्षणं तेज'. प्राणापानलक्षणो वायु , शुषिरलक्षणमाकाशमिति—तदपि न युज्यते ।

यतोऽत्रापि केषाञ्चिच्छरीराणां शुक्राऽसृक्प्रभवोत्पत्तिर्न तत्र तन्मात्राणां गन्धोऽपि समुपलक्ष्यते । अदृष्टस्यापि कारणत्वकल्पनेऽतिप्रसङ्गः स्यात् । अण्डजोद्भिजाङ्करादीनामप्यन्यतषो(तश्चो)त्पत्तिर्भवन्ती समुपलक्ष्यते ।

तदेवं व्यवस्थिते प्रधानमहदहङ्कारादिकोत्पत्तिर्या सांख्यैः स्वप्रक्रिययाऽभ्युपगम्यते सा निर्युक्तिकमेव स्वदर्शनानुरागेणाभ्युपगम्यत इति ।

आत्मनश्चाकर्तृकत्वाभ्युपगमे कृतनाशोऽकृताभ्यागमश्च स्यात् , बन्धमोक्षाभावश्च । निर्गुणत्वे च ज्ञाम(न)शून्यतापत्तिरित्यतो बालप्रलापमात्रम् । प्रकृतेश्चाऽचेतनाया आत्मार्थं प्रवृत्तिर्युक्तिविकलेति ।

अथ बौद्धमतं निरूप्यते । तत्र पदार्था द्वादशायतनानि । तद्यथा—चक्षुरादीनि पञ्च, रूपादयश्च विषयाः पञ्च, मनआयतनम्, धर्मायतनं च । धर्माः सुखादयः ।

द्वादशायतनपरिच्छेदके प्रत्यक्षानुमाने द्वे एव प्रमाणे ।

तत्र चक्षुरादीन्द्रियाण्यजीवग्रहणेनैवोपात्तानि भावेन्द्रियाणि तु जीवग्रहणेनेति । रूपादयश्च विषया अजीवोपादानोपात्ता न पृथगुपादातव्याः । शब्दायतनं तु पौद्गलिकत्वाच्छब्दस्याजीवग्रहणेन गृहीतम् । न च वस्तुप्रतिव्यक्तिपदार्थता युक्ता सङ्गता वा । धर्मात्मकं सुखं दुःख च यद्वसातसातोदयरूप ततो जीवगुणत्वाज्जीवेऽन्तर्भावः । अथ तत्कारणं कर्म ततः पौद्गलिकत्वादजीव इति ।

प्रत्यक्षं च तैर्निर्विकल्पकमिष्यते । तच्चानिश्चयात्मकतया प्रवृत्तिनिवृत्त्योरनङ्गमित्यप्रमाणमेव । तदप्रामाण्ये तत्पूर्वकत्वादनुमानमपीति ॥

इति पञ्चदर्शनखण्डनम् ॥ ग्रन्थाग्रं २००॥ संवत १५०३ वर्षे श्रावणसुदि पञ्चम्या भोमवारे लिखितम् । समाप्तम् अजाहर्याम् । शुभं भवतु ॥ श्री ॥

अज्ञातकर्तृकः

# ॥ विविधमतस्थापकोत्थापकानुमानसङ्ग्रहः ॥

## १. सर्वज्ञवादः

अस्ति सर्वज्ञः सुनिश्चितासम्भवद्बाधकप्रमाणत्वात् सुखादिवत् ॥१॥ कश्चिदात्मा सकलार्थसाक्षात्कारी तद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबन्धप्रत्ययत्वात् । यद् यद् ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबन्धप्रत्यय तत् तत् साक्षात्कारि । यथाऽपगततिमिरादिप्रतिबन्धलोचनं रूपसाक्षात्कारि । सकलार्थग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबन्धप्रत्ययश्च कश्चिदात्मा । तस्मात् सकलार्थसाक्षात्कारी । न चायं विशेषणासिद्धो हेतुरागमद्वारेणाशेषार्थग्रहणस्वभावत्वस्यात्मनि प्रसिद्धत्वात् ॥२॥ रागादय कस्यचिदत्यन्तमुच्छिद्यन्ते । अस्मदादिषु तदुच्छेदप्रकर्षापकर्षोपलम्भात् । सूर्याद्यावरकजलदपटलवत् ॥३॥ ज्ञानतारतम्यं क्वचिद्विश्रान्तं तर तमशब्दवाच्यत्वात् परिमाणतारतम्यवत्[१] ॥४॥ तथा सर्वे भावा कस्यचित् प्रत्यक्षाः प्रमेयत्वात्[२] । घटवत् । यस्य च प्रत्यक्षाः सर्वज्ञः सः ॥५॥ सम्भवति सर्वार्थसाक्षात्कारी । अनुपदेशालिङ्गाविसंवादिविशिष्टदिग्देशकालप्रमाणाद्यात्मकचन्द्रादिग्रहणाद्युपदेशदायित्वात् । यो यद्विषयेऽनुपदेशालिङ्गाविसंवाद्युपदेशदायी स तत्साक्षात्कारी । यथा स्वयमनुभूतेऽर्थेऽस्मदादिः । अनुपदेशालिङ्गाविसंवाद्युपदेशदायी च कश्चित् । तस्मात् तत्साक्षात्कारी । न च तथाविधोपदेशदायित्वस्य वृद्धपरम्परायातत्वादसिद्धं तत्साक्षात्कारित्वम् । तेषां रागादिमत्त्वेन तथाविधोपदेशदानाभावात् ॥६॥ कस्मिंश्चिदसर्वज्ञे सर्वज्ञशब्दो मुख्यसर्वज्ञापेक्ष । गौणत्वात् । माणवकेऽग्नित्ववत् ॥७॥ ज्ञानं क्वचिदात्मनि प्रकर्षवत् । स्वावरणहान्युत्कर्षे सति प्रकाशकत्वात् । चक्षुर्दीपादिवत् । यत्र च प्रकर्षवज्ज्ञानं स सर्वज्ञ ॥८॥ समस्ति समस्तवस्तुविस्तारगोचरं विशदं प्रत्यक्षदर्शनम् । तद्गोचरानुमानप्रवृत्ते । इह यद्गोचरानुमानं प्रवर्तते तस्य ग्राहकं प्रत्यक्षं समस्ति । यथा चित्रभानोः । प्रवर्तते च सकलार्थविषयमनुमानमतस्तदवलोकिना विशददर्शनेनाऽपि भवितव्यम्[३] । तद्वान् सर्वज्ञः ॥९॥ तथाविधो विवक्षितः कश्चिज्जीव सम्भवदत्यन्तविशुद्धिकोऽविशुद्धिप्रतिपक्षाविकलकारणकलापोपेतत्वात् । यो योऽविशुद्धिप्रतिपक्षाविकलकारणकलापोपेत स सम्भवदत्यन्तविशुद्धिको यथा क्षारमृत्पु-

---

१. यत्र च विश्रान्त स सर्वज्ञ ।

२ न च प्रमेयत्वमसिद्धम । अभावप्रमाणव्यभिचारप्रसक्ते । तथाहि प्रमाणपञ्चकातिक्रान्तस्य हि वस्तुनोऽभावप्रमाणविषयता भवताऽभ्युपगम्यते । यदि च जलधिजलपलप्रमाणादिषु प्रमाणपञ्चकातिक्रान्तत्वमप्रमेयत्व तदा तेष्वप्यभावप्रमाणविषयत्वान्न चात्र तत्त्वेऽपि साऽसम्भविनीति ।

३. इदं केवलज्ञानसाधकमनुमानम् ।

टपाकादिविशुद्धिकारणकलापोपेतो जात्यो रत्नविशेषः । तथा च तथाविधो विवक्षितः कश्चिज्जीवः प्रकर्षप्राप्ततपश्चारित्रज्ञानाश्रय-ध्यान-योगनिरोधादिविशुद्धिकारणकलापोपेतस्तस्मात् सम्भवदत्यन्तविशुद्धिक' ॥१०॥ तथाविधस्य कस्यचिद् भव्यजीवस्याष्टादशपापस्थानोपार्जितज्ञानाद्यावृतिरूपं कर्म प्रतिनियतविशिष्टवियोजकभावसामग्र्यामत्यन्तं वियुज्यते । आवृतिरूपत्वात् । यद् यद् आवृतिरूपं तत् तदत्यन्तं वियुज्यते । यथा प्रतिनियतविशिष्टवियोजकभावसामग्रीसद्भावे काञ्चनोपलकाञ्चनस्य मलपटलम् । तथा चेदमष्टादशपापस्थानोपार्जितं ज्ञानाद्यावृतिरूपं कर्म । तस्मादत्यन्तं वियुज्यते । एवंविधः सकलकर्मवियुक्तो जीवो ज्ञानस्वरूपः सकलार्थग्रहणप्रवण' सर्वज्ञ इति ॥११॥ अभ्यस्यमानायाः प्रज्ञाया व्याकरणादिना शास्त्रसंस्कारेणोत्तरोत्तरवृद्ध्या प्रज्ञातिशयो दृष्टस्तत्र कस्यचिदत्यन्तातिशयप्राप्ते सर्वज्ञत्वं स्यादिति सम्भवानुमानम् ॥१२॥

॥ इति सर्वज्ञसाधकान्यनुमानानि ॥

*

* *

## २. ईश्वरजगत्कर्तृत्ववादः

अथेश्वरजगत्कर्तृत्वसाधकानि ।

असाधारणकारणपूर्वकं जगद्वैचित्र्यं विचित्रत्वाच्चित्रादिवैचित्र्यवत् । १ उर्वी-पर्वत-तर्वादिक सर्वं बुद्धिमत्कारणाधिष्ठितम् । स्थित्वा स्थित्वाऽभिमतफलसम्पादनाय प्रवर्तमानत्वात् । यथा वास्यादि द्वैधीकरणादौ ॥२॥ विमतं सकर्तृकम् । सन्निवेशविशिष्टत्वात् घटवत् । अभूतभावित्वात् अचेतनोपादानत्वाद्वा घटवदेव ॥५॥ अयं घट एतज्जनकानित्यज्ञानेतरज्ञानजन्य' ।कार्यत्वात् पटवत् ॥६॥ विमतं सर्वप्रमातृपरकर्तृपूर्वकम् । कार्यत्वात् । सर्वप्रमातृपरकतृपूर्वकं यन्न भवति तन्न कार्यम् । यथाऽऽत्मा । न च तथेदं कार्यं न भवति । तस्मात् सर्वप्रमातृवत् परकर्तृपूर्वकं (सर्वप्र-(मातृपरकर्तृपूर्वकं ?) भवति ॥७॥ इच्छादय एतद्ग्राहकानित्यज्ञानातिरिक्तप्रत्यक्षवेद्या' । अपरोक्षत्वात् । रूपादिवत ॥८॥ इति वक्त्रछा(कर्त्रिच्छा)या अनुमानम् । भूधरादिक कार्यम् । सावयवत्वात् घटवत् ॥९॥ भू-भूधराद्यमु(रादि उत्पादवत् । अवयवित्वात् । घटवत् ॥१०॥

॥ इति ईश्वर-जगत्कर्तृत्वसाधकानि ॥

अथ तन्निषेधे । ईश्वरो जगत्कर्ता न भवति । निरुपकरणत्वात् । दण्ड-चक्र-चीवराद्युपकरणरहितकुलालवत् ॥१॥ तथात्रैव पक्षे व्यापित्वाद् व्योमवत् ॥२॥ एक-

त्वात् तद्वत् ॥३॥ अशरीरत्वात्[४] । सिद्धात्मवत् ॥४॥ ईश्वरस्त्रिजगन्निमित्तं न भवति । विशेषगुणाधिकरणत्वात् । व्यतिरेके दिक्कालौ ॥५॥ ईश्वरो भ्वादिनिमित्तं न भवति, अमूर्तद्रव्यत्वे[५] सति अनिमित्तत्वादन्तरिक्षवत् । व्यतिरेके दिक्कालौ ॥७॥ क्षित्यादिकं बुद्धिमद्विधेयं न स्यादस्मदाद्यनवग्राह्यपरिणामाधारत्वात् । व्योमवत् ॥८॥ विवादाध्यासितमकर्तृकं शरीराजन्यत्वात् । शरीरनिर्मितेतरत्वाद्वा । शरीरिणाऽजनितत्वात् । महाभूतत्वात् । गगनवत् ॥१२

॥ इतीश्वरजगत्कर्तृत्वनिषेधकानि ॥

*

* *

## ३. प्रपञ्चमिथ्यात्ववादः

विधिरेव तत्त्वम् । प्रमेयत्वात् । यत्तु न विधिरूपं तन्न प्रमेयम् । यथा खपुष्पम् ॥१॥ सर्वे भावा ब्रह्मविवर्ताः । सत्तैकरूपेणान्वितत्वात् । यद् यद्रूपेणान्वित तत् तदात्मकमेव । यथा मृद्रूपेणान्विता मृदात्मका एव घटादयः । सत्तैकरूपेणान्विताश्चामी तस्माद् ब्रह्मविवर्ता एव ॥२॥ ग्रामारामादयः पदार्थाः प्रतिभासान्तःप्रविष्टाः । प्रतिभासमानत्वात् । प्रतिभासस्वरूपवत् ॥३॥ प्रपञ्चो मिथ्या । अनात्मत्वात्[६] । जडत्वात् । दृश्यत्वात् । उत्पत्तिमत्त्वात् । विनाशित्वात् । यत्तु नैवं न तदेवं यथा परब्रह्म ॥८॥ तत्र जडत्व नामाऽनात्मप्रकाशकत्वम् । असंविद्रूपत्वम् । पर्युदासात्मकं[७] वा । दृश्यत्वं तु स्वव्यवहारे स्वातिरेकिस्वदर्शनापेक्षानियतिविधिमात्रमिति । इति जडत्व-दृश्यत्वयोर्भेद । अपेक्षानियतिर्दृश्यत्वमित्युक्ते स्वप्रकाशस्यापि व्यञ्जकापेक्षानियमोऽस्त्येव व्यवहारे । तदर्थमुक्तं स्वदर्शनपदम् । तथापि स्वरूपभूतस्फुरणाऽपेक्षाऽस्त्येवेति स्वातिरेकिपदम् । तथाप्यात्मन सोपाधिव्यवहारे स्वातिरेकिस्वदर्शनापेक्षाऽस्तीति तदर्थमुक्तं स्वव्यवहार इति । विधिमात्रमिति केवलविधिरूपम् । न निषेधात्मरूपम् । इति दृश्यत्वार्थे प्रमाणमालायाम् । अद्वैतवादी प्राह—अस्माकं भेदप्रतीतिव्यवस्थापर्यनुयोगबाणधारणाय वज्रवारणायमानाऽनिर्वचनीयता विजयते । ननु किमिदमनिर्वचनीयत्वम् । न तावन्निर्वचनानर्हत्वम् । मूकीभावप्रसङ्गात् । नापि सद्वै-

४. शरीरप्रेरकेणात्मनानेकान्त ।

५. अथवाऽमूर्तद्रव्यत्वे सति परापरगुणानधिकरणत्वात् आकाशवत् । (कालेन व्यभिचारोऽस्मिन्-हेतौ ।)

६ अनात्मत्वात = अप्रकाशकत्वात् । अस्यानुमानस्य विपर्ययोऽयम् । यथा —परब्रह्म मिथ्या पराप्रकाशकत्वात् । यत् सत्य तत् परप्रकाशक दृष्टम् । यथा भानु-प्रदीपेन्द्रियज्ञान-चन्द्रादय ।

७. अत्राब्रगन्धादिवदन्यव्यावृत्त्यात्मकं जडत्वम् ।

लक्षण्यम् असतोऽपि तथात्वात् । न चासद्वैलक्षण्यं सतोऽनिर्वचनीयत्वापातात् नापि सदसद्वैलक्षण्यम् । सदसतोः प्रत्येकमनिर्वचनीयत्वात् । न च सद्विलक्षणत्वे सति असद्विलक्षणत्वम् । तथाभूतस्य क्वाप्यदर्शनात् प्रमाणाभावाच्चेति चेत् । न ख्यातिविशेषविषयत्वे बाध्यत्वानुपपत्तिस्तथात्वसाधिका । तथाहि खपुष्पसमत्वेऽपरोक्षत्वानुपपत्तिरात्मसमत्वे बाधाऽनुपपत्तिर्न चान्यत्र दृष्टमेवान्यत्राश्रयणीयं दर्शनाऽनवस्थापातात् । उक्तं च—

सत्त्वे न भ्रान्तिबाधौ स्तां नासत्त्वे ख्यातिबाधकौ ।
सदसद्भ्यामनिर्वाच्याविद्या वेद्यैः सह भ्रमाः ॥

तथाऽनिर्वाच्यः प्रपञ्चः । अपरोक्षप्रतिभासबाधाऽन्यथाऽनुपपत्तेः । इति प्रपञ्चस्यानिर्वाच्यत्वसाधकमनुमानम् ॥

॥ इति परब्रह्मसाधकान्यनुमानानि ॥

प्रपञ्चो मिथ्या न भवति । असद्विलक्षणत्वात् । आत्मवत् ॥१॥ प्रतिभासो ग्रामारामादिषु प्रविष्टस्तान् विना तस्य कुत्राप्यदृश्यमानत्वात् । यद् यद्विना कुत्रापि न दृश्यते तत् तत्रैवास्ति । यथा परब्रह्मस्वरूपं परब्रह्मणि घटादिस्वरूपं घटादिषु । न दृश्यते च तान् विना कुत्रापि प्रतिभासः । तस्मात् तेष्वेव विद्यते । ततश्च प्रपञ्चः सत्य एव ॥२॥ प्रपञ्चस्तत्त्वाऽऽवेदकप्रमाणविषयो धर्मित्वादात्मवत् ॥३॥ विवादाधिरूढः प्रपञ्चः सत्य प्रमाणसिद्धत्वादात्मवत् ॥४॥ अयं घट एतद्घटनिष्ठबाध्यभेदातिरिक्तद्रव्याश्रयः । द्रव्यत्वात् पटवत् ॥५॥ प्रपञ्चः सत्यः प्रतिभास्यत्वे सति प्रतीतिजनकत्वात् । यथा परब्रह्म ॥६॥

जलचन्द्र-स्वप्नज्ञानादि भावरूप नैमित्तिकत्वाद् घटवत् ॥१॥ जलबिम्बं भाव सम्यग्गमकत्वादग्निगमकधूमवत् ॥२॥ प्रतिबिम्बं बिम्बाद्वि(दन्यद्वि)लक्षणप्रतीतिग्राह्यत्वात् । यथा मुद्रातः प्रतिमुद्रा । तथा चेदम् । तस्मात् तथा ॥३॥ इदं प्रतिबिम्बस्यार्थान्तरत्वसाधकम् । प्रतिबिम्बस्योत्पादकं कारण जलमेवोपादानकारणं, चन्द्रादिकं तु निमित्तकारणम् । गगनतलावलम्बिनं चन्द्र निमित्तीकृत्य जलादेस्तथापरिणमनात् । स्वप्नज्ञान भाव. । ज्ञानत्वात् । घटज्ञानवत् ॥४॥ इति प्रपञ्चसाधकान्यनुमानानि । जलचन्द्र—स्वप्नज्ञानादीना भावरूपत्वसाधकानि च ।

---

८ शुक्तिरजतादिससर्गिधर्मिणि व्यभिचारवारणाय नाऽसौ धर्मी मिथ्यात्वादिति योज्यम् ।

९ बाध्यभेदातिरिक्त° = सत्यभेद°

ॐ।। प्रपञ्चो मिथ्या न भवति। असद्विलक्षणत्वात्। परब्रह्मवत्। नन्वत्र असद्विलक्षणत्वहेतौ नञ् प्रसज्य. पर्युदासो वा। प्रसज्यपक्षे सत· पदार्थान्न वि[ल]-क्षणः सदविलक्षण इत्यर्थ·। सत्सदृश एवेत्यर्थ·। तथा च प्रतिवाद्यसिद्धो हेतुः। वेदान्तिना प्रतिवादिना सता परब्रह्मणा सह प्रपञ्चस्य साम्यानङ्गीकारात्। यद्वा अन्योन्याश्रय। तथाहि सत्सदृक्त्वसिद्धौ मिथ्यात्वाभावसिद्धिः। मिथ्यात्वा-भावसिद्धौ च सत्सदृक्त्वसिद्धि। अथ चेत् सच्छब्देनार्थक्रियाकारित्वमेव विवक्षितं तदाऽसद्विलक्षणत्वादिति पदानर्थक्यम्। सत्त्वादित्येव सिद्धेः। तथा च साध्यस-मोऽप्ययं हेतु·। उभयो सत्सदृक्त्वज्ञापनात्। अथ चेत् ·पर्युदासः तदानीमसत· पदार्थाद्विलक्षणत्वादिति हेत्वर्थ· सङ्गच्छते। सोऽपि न युक्त·। असच्छब्देन किला-ऽभाव उच्यते। स च प्रागभावादिभेदाच्चतुर्धा। तत्राद्याभावत्रयाद्विलक्षणत्वं यदि हेतु-स्तदाऽसिद्ध एव। मृत्पिण्ड-कपाल-स्तम्भादिभ्य. क्रमेण प्रागभावप्रध्वंसाभावान्योन्या-भावसञ्ज्ञेभ्य प्रपञ्चस्य वैलक्षण्यानङ्गीकारात्। प्रपञ्चस्य तदाद्यात्मकत्वादेव। अथ चेत् खरविषाणादेरत्यन्ताभावाद्वैलक्षण्यमिष्टं तदा व्यभिचारी हेतु.। शुक्तिरजतादौ मिथ्यारूपे हेतोर्वर्तनात्। अपि च केन गुणेन प्रपञ्चस्याऽसतो वैलक्षण्यमाकाङ्क्षितम्। किं ज्ञानमात्रगोचरत्वेन उत प्रपञ्चग्राहकज्ञानस्य सत्यत्वादेव। तत्कालमर्थक्रियाकरणेन कालान्तरेऽप्यर्थक्रियाकरणेन वा। इति विकल्पचतुष्कम्। आद्ये शुक्तिरूप्यमृगतृष्णि-कादिना व्यभिचारी हेतु·। द्वितीये चक्रकम्। तथाहि—ज्ञानस्य सत्यत्वं तावत् सम्य-गर्थग्राहकतया। सा चार्थस्य सम्यक्त्वसिद्धे। तच्च तद्ग्राहकज्ञानसत्यत्वरूपेण सद्विलक्ष-त्वहेतुना सिसा(धा)वयिषितमिति स्पष्टमेव चक्रकं साध्यहेतो। तृतीये तु शुक्तिरूप्यर-ज्जुभुजगादिभिर्व्यभिचारी हेतु। तत्कालं ज्ञानक्षणेतरैपि द्रष्टुरुपादित्साजिहासोद्भू-तप्रवृत्तिनिवृत्तिहर्षभयाद्यर्थक्रियाणां यथाक्रम विधापनदर्शनात्। तुर्यस्तु क्षोदीयानेव। निरीक्षणक्षणान्तरमेव क्षयमुपगच्छत स्वच्छपयोबुद्बुदस्य कालान्तरेऽर्थक्रियाकरणाभा-वेऽपि मिथ्यात्वानङ्गीकारात्। तथा च हेतोर्भागासिद्धतापत्ति·। घटादौ वर्तनाद् बुद्बुदावर्तनाच्च। एव च न किञ्चन प्रपञ्चस्य सद्वैलक्षण्यं लक्ष्यते। पर्यन्ते स्वरूपा-सिद्ध एवायम् ।।६।।

*

* *

## ४. विज्ञानवादः

नीलादय पदार्था सवेदनरूपा एव। अवभासमानत्वात्। सुखादिवत् ।।१।। अर्थ. सवेदनान्न भिद्यते। नियमेन सहोपलभ्यमानत्वात्। तैमिरिकोपलभ्यमानादे-कस्माच्चन्द्राद् द्वितीयचन्द्रवत् ।।२।। ज्ञानमया भावा स्वयप्रकाशमानत्वात् सुखादि-

वत् ॥३॥ नीलादयो ज्ञानादभिन्ना एव वेद्यमानत्वात् ज्ञानस्वरूपवत् ॥४॥ चित्रज्ञानं नीलसुखाद्यनेकाकारखचितमाभासते न पुनर्बाह्यार्थस्तत्सद्भावे प्रमाणाभावात् । यस्य सद्भावे प्रमाणं नास्ति तन्नास्ति । यथा खपुष्पम् । नास्ति च बाह्यार्थसद्भावे किमपि प्रमाणम् । तस्मान्नास्त्येव बाह्योऽर्थः । न चेदमसिद्धम् । यतस्तद्ग्राहकं ज्ञानं साकारं निराकारं वा स्यात् । द्वितीये तत्त्वाविशेषात् प्रतिकर्मव्यवस्थाविलोपः । प्राच्ये तु सिद्धमेव ज्ञानं नीलाद्यनेकाकाराक्रान्तम् । न तु तद्व्यतिरिक्तो जडोऽर्थः । तद्व्यवस्थाहेतो' कस्यचिदप्यभावात् । न चाऽऽकारविशिष्टचिदेव तद्व्यवस्थाहेतुः । तस्य स्वाकारानुभवमात्रेणैव चरितार्थत्वात् । तदुक्तम्—

धियोऽनीलादिरूपत्वे[१०] बाह्योऽर्थः किं निबन्धनः ।
धियो नीलादिरूपत्वे[११] बाह्योऽर्थः किं निबन्धनः ॥

॥ इति योगाचारसमतज्ञानाद्वैतसिद्धिः ॥

नीलादयः पदार्था अनेके न भवन्ति । एकज्ञानाव्यतिरिक्तत्वात् । यदेकस्माद्व्यतिरिक्त [तदनेकम् । नीलादय. पदार्था' नैकज्ञानाद् व्यतिरिक्ताः ।] यथा ज्ञानस्वरूपमिति ॥१॥ चित्रता ज्ञानधर्मो न भवति । बाह्यार्थधर्मतया प्रत्यक्षे प्रतिभासमानत्वात् । यो यद्धर्मतया प्रतीयते स ततोऽन्यधर्मो (तस्यैव धर्मो नाऽन्यस्य) । यथाऽग्निधर्मतया प्रतीयमाना भासुरोष्णता न जलधर्मः । बाह्यार्थधर्मतया प्रतीयते च चित्रता । तस्मात्तद्धर्म' ॥२॥

॥ इति चित्रज्ञानोत्थापकानुमानद्वयम् ॥

*

* *

## ५. शब्दब्रह्मवादः

॥ॐ॥ सर्वे भावा' शब्दमया' । तदाकारानुस्यूतत्वात् । ये यदाकारानुस्यूतास्ते तन्मयाः । यथा घट-घटी-शरावोदञ्चनादयो मृदाकारानुस्यूता मृण्मया एव ॥१॥ शब्दान्न व्यतिरिच्यतेऽर्थः । तत्प्रतीतावेव प्रतीयमानत्वात् । यत् प्रतीतावेव यत् प्रतीयते न तत् ततो व्यतिरिच्यते । यथा शब्दस्य स्वरूपम् । शब्दप्रतीतावेव प्रतीयते चार्थ । तस्मात्तथा ॥२॥ इति शब्दब्रह्मसाधकानुमानद्वयम् ॥

---

१० बाह्यार्थस्य ह्येतदेव फल यत्तेन बुद्धौ स्वाकारोऽर्पणीय । तस्याश्चातद्रूपत्वात् किं तेन ।

११ धिय एव बाह्यार्थरूपतया तदर्थक्रियाकरणात् ।

तुलना धियो नीलादिरूपत्वे बाह्योऽर्थ किंप्रमाणक ।
धियोऽनीलादिरूपत्वे स तस्यानुभव कथम् ॥ प्र०वा०२.४३३

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिवाऽऽभाति सर्वं शब्दे प्रतिष्ठितम् ॥१॥
वाग्रूपता चेदुत्क्रामेद् अवबोधस्य शाश्वती ।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी ॥२॥
[वाक्यप० १.१२३–२४]

यथा विशुद्धमाकाशं तिमिरोपप्लुतो जनः ।
सङ्कीर्णमिव मात्राभिश्चित्राभिरिव मन्यते ॥३॥
तथेदममलं ब्रह्म निर्विकारमविद्यया ।
कलुषत्वमिवापन्नं भेदरूपं प्रपश्यति ॥४॥
[बृहदा० भा० वा० ३.५.४३–४४]

निबद्धैकरूपत्वाद्वीचीबुद्बुदफेनवत् ।
वाचः सारमपेक्षन्ते शब्दब्रह्मोदकाद्वयम् ॥५॥

॥ इति शब्दब्रह्मवादिमतसिद्धिः ॥

शब्दार्थयोस्तादात्म्यं न भवति । विभिन्नेन्द्रियग्राह्यत्वात् । यथा रूप रसयोः ॥१॥ न चेदमसिद्धम् । शब्दाकाररहितस्य घटादेर्लोचनविज्ञाने प्रतिभासनात्, तद्रहितस्य तु शब्दस्य श्रोत्रज्ञाने । तथाभूतयोरप्यनयोस्तादात्म्याभ्युपगमेऽतिप्रसङ्गः । तथा नास्ति शब्दार्थयोस्तादात्म्यम् । विभिन्नदेश-कालाकारत्वात् । यथा घट–पटयोः । न च विभिन्नदेशत्वमत्रासिद्धम् । प्राक् प्रसाधितत्वात् । नापि विभिन्नकालत्वम् । घटादीनां तच्छब्देभ्यः प्रागपि सत्त्वप्रतीतेः । नापि विभिन्नाकारत्वम् । तत्र तस्य सकलजनप्रसिद्धत्वात् । ननु तत्तादात्म्याभावे कथमतोऽर्थप्रतीतिरित्ययुक्तम् । तदभावेऽप्यस्याः सङ्केतसामर्थ्यादुपजायमानत्वात् । शब्दपरम्परातो हि शब्दानां सहजयोग्यतायुक्तानामर्थप्रतीतिप्रसाधकतमत्वम् । काष्ठादीना पाकप्रसाधकत्ववत् । तन्न तत्र तादात्म्य घटते ॥२॥

॥ इति शब्दार्थयोस्तादात्म्यनिषेधः ॥

*

* *

## ६. शब्दपौद्गलिकत्ववादः

शब्दोऽपौद्गलिकः स्पर्शशून्याश्रयत्वात् । तथात्रैव पक्षे अतिनिबिडप्रदेशे प्रवेशनिर्गमयोरप्रतिघातात्, पूर्वं पश्चाच्चावयवानुपलब्धेः, सूक्ष्ममूर्तद्रव्यान्तराप्रेरकत्वाद्, गगनगुणत्वाच्च ॥५॥ न चास्य गगनगुणत्वमसिद्धम् । तथाहि–शब्दः क्वचिदाश्रितो गुणत्वाद् रूपादिवत् ॥१॥ न चास्य गुणत्वमसिद्धम् । शब्दो गुणः । द्रव्यकर्मा-

न्यत्वे सति सत्तासम्बन्धित्वात् । यथा रूपादि ॥२॥ न च द्रव्यकर्मान्यत्वमसिद्धम् । शब्दो न द्रव्यमेकद्रव्यत्वात् । रूपादिवत् ॥३॥ न चैकद्रव्यत्वमसिद्धम् । एकद्रव्यं शब्दः । सामान्यविशेषवत्त्वे सति बह्येकेन्द्रि(र्ह्येकेन्द्रि)यप्रत्यक्षत्वात् । रूपादिवत् ॥४॥ तथा कर्मापि न स्यादसौ । सयोगविभागाकारणत्वाद् रूपादिवत् ॥५॥ इतश्च न द्रव्यं न कर्म शब्दोऽनित्यत्वे सति नियमेनाचाक्षुषप्रत्यक्षत्वात् । रसादिवत् । आत्मना व्यभिचारनिवृत्त्यर्थमनित्यत्वे सतीति विशेषणम् । तथाप्यचाक्षुषप्रत्यक्षप्रतीयमानद्रव्य-कर्मभ्यां व्यभिचारस्तन्निवृत्त्यर्थं नियमेनेति । तयोः शब्दादिवदचाक्षुषप्रत्यक्षत्वनियमासम्भवात् ॥६॥ तथा शब्दो द्रव्य कर्म च न स्यादसौ व्यापकद्रव्यसमवेतत्वात् सुखादिवत् ॥७॥ अतः सिद्धं द्रव्यकर्मान्यत्वे सति विशेषणम् । द्रव्यकर्मान्यत्वादित्युक्ते सामान्यादिना व्यभिचारस्तन्निवृत्त्यर्थं सत्तासम्बन्धित्वादित्युक्तम् । अतः सिद्ध गुणत्वेन शब्दस्य क्वचिदाश्रितत्वम् । यश्चास्याश्रयस्तत् पारिशेष्यादाकाशम् । तथाहि—न तावत् स्पर्शवतां परमाणूनां विशेषगुणोऽसावस्मदादिप्रत्यक्षत्वात् । कार्यद्रव्यरूपादिवत् ॥८॥ नापि कार्यद्रव्याणा पृथिव्यादीनां विशेषगुणोऽसौ कार्यद्रव्यान्तराप्रादुर्भावेऽप्युपजायमानत्वात् । सुखादिवत् ॥९॥ अकारणगुणपूर्वकत्वात् । इच्छादिवत् ॥१०॥ अयावद्द्रव्यभावित्वात् ॥११॥ अस्मदादिपुरुषान्तरप्रत्यक्षत्वे सति पुरुषान्तराप्रत्यक्षत्वात् । तद्वत् ॥१२॥ स्पर्शवता हि पृथिव्यादीनां यथोक्तविपरीतगुणाः प्रतीयन्त इति । नाप्यात्मविशेषगुणोऽहङ्कारेण विभक्तग्रहणात् । आत्मान्तरग्राह्यत्वाच्च बुद्ध्यादीनां चात्मगुणानां तद्वैपरीत्येनोपलब्धे । नापि मनोगुणोऽस्मदादिप्रत्यक्षत्वाद् रूपादिवत् ॥ नापि दिक्कालयोर्विशेषगुण । [तयो·] पूर्वापरादिप्रत्ययहेतुत्वात् । इति पारिशेष्यात् सिद्धं गगनगुणत्व शब्दस्य ।

॥ इति शब्दस्यापौद्गलिकत्वसाधकानि ॥

पौद्गलिकः शब्द इन्द्रियार्थत्वाद् रूपादिवत् ॥१॥ शब्दो द्रव्य गुण-क्रियावत्त्वाद् बाणादिवत् ॥२॥ न चास्य गुण-क्रियावत्त्वमसिद्धं शब्दस्य गुणक्रियावत्त्वसाधकप्रमाणसद्भावात् । तथाहि—गुणवान् शब्द. स्पर्शाल्पत्वमहत्त्व-परिमाण-सङ्ख्यासयोगाश्रयत्वाद् बदरामलकादिवत् ॥३॥ न तावत् स्पर्शाश्रयत्वमसिद्धम् । तथाहि—स्पर्शवान् शब्दः स्वसम्बद्धार्थान्तराभिघातहेतुत्वात् । मुद्गरादिवत् ॥४॥ न चेदमसिद्धं कंसपात्र्यादिध्वानाभिसम्बन्धे श्रोत्राभिघातप्रतीतेः । तथा स्पर्शवान् शब्द· स्पर्शवताऽर्थेनाभिहन्यमानत्वात् तृणादिवत् ॥५॥ न चेदमप्यसिद्धम् । प्रतिवातभित्त्यादिभिः स्पर्शवद्भिस्तदभिघातप्रतीते. । नाप्यल्पत्वमहत्त्वपरिमाणाश्रयत्वमसिद्धम् । अल्प-

महत्त्वपरिमाणप्रतीतिविषयत्वात् । यथा बदरामलकादि । न चायमसिद्धो हेतुः । अल्पः शब्दो महान् शब्द इति प्रतीतेर्विद्यमानत्वात् । इति सिद्धं शब्दस्य गुणक्रियावत्त्वम् । तथा पौद्गलिकः शब्दो गुणक्रियावत्त्वे सत्यस्मदादिकस्येन्द्रियप्रत्यक्षत्वात् । घटादिवत् ॥७॥ न गगनगुणः शब्दोऽस्मदादिप्रत्यक्षत्वाद् रूपादिवत् ॥८॥

॥ इति पौद्गलिकत्वसाधकानि शब्दस्य ॥

## ७. प्रमाणवादः

प्रमाणं द्विधा । प्रत्यक्षपरोक्षभेदात् । अत्र केचित् प्राहुः प्रत्यक्ष ज्येष्ठं प्रमाणं स्वार्थनिर्णीतावन्यानपेक्षत्वात् । एव तर्हि अनुमानमपि ज्येष्ठमस्तु । तत एव । न हि तदपि तस्यामन्यापेक्षम् । स्वोत्पत्तौ तदन्यापेक्षमिति चेन्न प्रत्यक्षमपि स्वोत्पत्तावन्यापेक्षमेव । तत् स्वनिमित्तमक्षादिकं तत्रापेक्षते न पुनः प्रमाणमन्यदिति चेत्तर्ह्यनुमानमपि तथैवास्तु । न हि तदपि लिङ्गहेतुमपेक्ष्य जायमानमन्यत्प्रमाणमपेक्षते । यत्तु लिङ्गस्वरूपग्राहि प्रमाणम् तदनुमानोत्पत्तिनिमित्तमेव न स्यात् । लिङ्गपरिच्छित्तावेव चरितार्थत्वात् । अथ प्रत्यक्षं ज्येष्ठं विशदावभासित्वात् । एवं चेत् तर्हि द्विचन्द्राद्यवभासिसवेदनस्यापि ज्येष्ठत्वापत्तिः ॥

अथ चार्वाकः प्राह—नानुमानं प्रमाण गौणत्वात् । पक्षधर्मत्वं हि तज्जनकस्य हेतोः स्वरूपम् । पक्षश्च धर्मधर्मिसमुदायात्मा । तदनिश्चये कथं तद्धर्मतया हेतोर्निश्चयस्तन्निश्चये वाऽनुमानवैफल्यम् । ततोऽवश्य पक्षधर्मव्यवहारसिद्धये धर्मधर्मिसमुदायरूढोऽपि पक्षशब्दस्तदेकदेशे धर्मिण्युपचरणीय. । तस्मादित्थं पक्षस्य गौणत्वम् । तद्गौणत्वे च हेतोरपि गौणता । तद्धर्मत्वलक्षणत्वात्तस्य । तस्माद् गौणकारणजन्यत्वेन गौणमनुमानम् । गौणत्वाच्च न प्रमाणम् । अपि चानुमानस्य धर्मी धर्मस्तत्समुदायो वा साध्यः स्यात् । तत्र यद्याद्यः सोऽयुक्तः । धर्मिण' प्रसिद्धत्वेन साधनवैफल्यप्रसक्ते' हेतोरनन्वयानुषङ्गाच्च । न खलु यत्र यत्र धूमस्तत्र तत्र पर्वतनितम्ब इत्यन्वय' सम्भवति । द्वितीयपक्षेऽपि धर्म' सामान्यरूपो विशेषरूपो वा साध्य' स्यात् । तत्राद्ये सिद्धसाधनम् । न च तन्मात्रप्रतीतौ किञ्चित् फलमुपलभामहे । न हि वह्नित्वं दाहपाकादावुपयुज्यमानं प्रतीतम् । विशेषरूपस्य च धर्मस्य साध्यत्वेऽनन्वयहेतुर्भवेत् । न ह्यत्रत्येदानींतनेन खदिरादिस्वभावेन वह्निना वह्निमान् पर्वतनितम्ब इत्यत्र विशेषेणान्वय सङ्गच्छते । महानसादौ दृष्टान्ते तथाविधसाध्येन सम धूमस्य व्याप्त्यप्रतीते. । तन्न धर्मोऽपि साध्यः, नापि तत्समुदायस्तस्याप्यन्यत्राऽनन्वयात् । न हि यत्र यत्र धूमस्तत्र तत्र [अग्निमत्]पर्वतनितम्ब इत्यन्वय' प्रतीतिधुरामधिरोहति । मूलाऽनुमानविषयापहारिणोऽनुमानविरोधस्य विशेषविरुद्धापराभिधानस्येष्टविघातकृतः सन्दे-

हहेतोर्विरुद्धाव्यभिचारिणो वा सर्वत्रानुमाने सम्भाव्यमानत्वाच्च दुष्प्राप प्रामाण्यम् ।

तदुक्तम्—

विशेषेऽनुगमाभावात् सामान्ये सिद्धसाधनात् ।
तद्वतोऽनुपपन्नत्वादनुमानकथा कुत. ॥

अनुमानविरोधो वा यदि वेष्टविघातकृत् ।
विरुद्धाव्यभिचारात्तु सर्वत्र सुलभोदयः ॥२॥

अथ जैनः प्रत्युवाच । यत्तावदूचे प्रत्यक्षमेक वटते प्रमाणमिति तदसम्यक् । स्वपरव्यवसायि ज्ञानं हि प्रमाणस्वरूपम् । तस्य च परोक्षेऽपि विद्यमानत्वात् । तथाहि—अनुमानादिकं प्रमाण स्वपरव्यवसायित्वात् प्रत्यक्षवदिति । यच्चाजल्पि नानुमानादिकं प्रमाणं गौणत्वादित्यादि तत्र यदि सक्षिप्तासंक्षिप्तचेतोभिः शास्त्रकारैर्धर्मधर्मिसमुदाये सङ्केतितोऽपि पक्षशब्दस्तदेकदेशे धर्मिण्युपचारेण प्रयुक्तः स्यान्नैतावता शास्त्रे पक्षशब्दात् प्रतिपत्तौ धर्मिणो गौणता । अनुमानसमये पुनः प्राकृतैरिव तार्किकैरप्यप्रयुक्तपक्षशब्दैरेव धर्मिणः प्रत्यक्षत' प्रतीयमानत्वे कथं गौणता । तदगौणताया च तदधिकरणस्य हेतोरप्यगौणत्वात् कथं तज्जन्यस्यानुमानस्य गौणत्वं गदितुमनुगुणम् । यच्चापरं न्यगादि—अनुमानादर्थनिश्चयो दुर्लभ इति तदेतत्तद्वचनं दर्शनादर्शनमात्रेण हेतुव्याप्तिग्रहणवादिनो जैमिनीयान् दुनोति न पुनस्तर्काख्यप्रमाणेन सर्वत्र साध्यसाधनसम्बन्धबोधाभिधायिनो जैनान् । यथैव हि तर्कप्रमाणेन लौकिकहेतूनामव्यभिचारनिश्चयः कर्तुं शक्यस्तथा तन्त्रप्रसिद्धहेतूनामपीति कथं न तेभ्योऽपि सा प्रतिपत्तिः । तन्न गौणत्वादनुमानस्याप्रामाण्यं वक्तुं युक्तमिति । अथास्पष्टस्वरूपत्वात् १ स्वनिश्चये परापेक्षत्वात् २ प्रत्यक्षपूर्वकत्वात् ३ अर्थादनुपजायमानत्वात् अवस्तुविषयत्वात् ५ बाध्यमानत्वात् ६ साध्यसाधनयो प्रतिबन्धप्रमाणाभावाद्वा ७ तस्याप्रमाण्यमुच्यते तदप्यल्पम् । न तावत् प्रथम' । यदि हि स्पष्टत्व प्रमाणलक्षणं स्यात्तदाऽनुमानान्निवर्तमान प्रामाण्यमादाय निवर्तेत इत्यप्रमाण्यमस्य युक्तं स्यात् । न चैतत् प्रमाणलक्षणं द्विचन्द्रादिज्ञाने स्पष्टत्वसद्भावेऽपि प्रामाण्याभावात् ॥१॥ न द्वितीय' । प्रत्यक्षवदनुमाया' स्वार्थनिश्चयेऽभ्यासावस्थाया परानपेक्षत्वादनभ्यासावस्थाया त्वत्र परापेक्षत्वं प्रत्यक्षस्याप्यस्ति ॥२॥ तृतीयस्त्वसिद्धः । तर्काख्यप्रमाणपूर्वकत्वेनानुमानस्याभिधीयमानत्वात् । अस्तु वा प्रत्यक्षादेवानुमितेर्जन्म तथापि नाऽप्रामाण्यम् । प्रत्यक्षं ह्यनुमानस्य जन्मनि [निमित्तमेव] स्वसामग्रीतश्चोपजायमानस्य तस्याऽप्रधान्ये(ऽप्रामाण्ये) प्रत्यक्षस्यापि तत एवाऽप्रामाण्यमस्तु । किञ्च, प्रत्यक्षपूर्वकत्वेनाऽनुमानस्याऽप्रामाण्ये प्रत्यक्षस्यापि कस्यचिदनुमानपूर्वकत्वे-

नाऽप्रामाण्यानुषङ्ग । दृश्यते ह्यनुमानान्निश्चित्य प्रवर्तमानस्य प्रमातुरनुमानपूर्विका प्रवृत्ति ॥३॥ नापि तुर्य । प्रत्यक्षवदनुमानस्यार्थादुत्पत्तेरनुभूयमानत्वात् ॥४॥ नापि पञ्चम । तद्वत् सामान्यविशेषात्मकार्थगोचरत्वात् तस्य । न हि अवस्तुभूताऽपोहगोचरमनुमानं सौगतवज्जैनैरिष्टम् । तत्र तद्गोचरत्वस्यानङ्गीकाराद् ॥५॥ नापि षष्ठः । यतो बाध्यमानत्व कि सत्यानुमानस्य तदाभासस्य वा । नाद्य. सत्यधूमादिसाधनादग्न्याद्यनुमाने बाध्यमानत्वस्यासम्भवात् । तदाभासस्य तु तत्सम्भवे तस्यैवाप्रामाण्यं युक्तम् । न सत्यानुमानस्य । अन्यथा प्रत्यक्षाभासस्य बाध्यमानत्वेनाऽप्रामाण्योपलम्भात् सत्यप्रत्यक्षस्याप्यप्रामाण्यापत्ति. ॥६॥ सप्तमोऽप्यसिद्धः । तर्काख्यप्रमाणस्य तद्ग्राहकस्य सद्भावात् । तर्कप्रमाणस्य हि सार्वत्रिकसम्बन्धप्रतिपत्तावपि सामार्थ्यस्वीकारात् ॥७॥ किञ्च, अनुमानस्योपद्रवस्तत्स्वरूपाभावान्निरवद्यतल्लक्षणाभावाद्वा ? नाद्य । तत्स्वरूपस्य सकलजनप्रतीतत्वाद् यतः—

गोपालोऽपि प्रबलविगलद्बाष्पबिन्दुप्रबन्धे
नेत्रे कर्तुर्मधुरमधुयुग्मञ्जरीम्लानिहेतो. ।
धूमात् पीडां क्वचिदपि समालोक्य मानात् प्रदेशे
जानात्येव ज्वलनमखिल क्षिप्तशङ्काविलास ॥[१२]

कथ चानुमानस्वरूपाभावे 'प्रत्यक्षमेव प्रमाणमगौणत्वात्' इत्यनुमानं वदतस्तव वचनविरोधो न स्याद् ? तथा च—

सद्भावमस्यति सदाऽनुमितेर्मतस्य
स्वीयस्य सिद्धिरनयैव च सतनोति ।
आभात्यलौकिकममुष्य मनीपिलोके
लोकायतस्य सकल चरित तदेतत् ॥
प्रामाण्यमितरच्चेह स्वत एवेति कापिला ।
प्रामाण्य च स्वतोऽन्यच्च परतो जैमिनीयका ॥
अप्रामाण्यं प्रामाण्य च बौद्धा स्वपरतो विदु ।
उभय परतो यौगा जैनानां [ तु ] यथायथम् ॥

*

---

१२ नापि निरवद्येति द्वितीय । हेतुग्रहणसम्बन्धस्मरणकारणक साध्यविज्ञानमित्यादेर्निरवद्यतल्लक्षणस्य सद्भावात् । यच्चोक्तं अनुमानस्य धर्मी धर्मस्तत्समुदायो वेत्यपि न प्रयोगकालापेक्षया साध्यस्य भेदात् । व्याप्तौ हि साध्य धर्मसामान्यम्, प्रयोगकाले तु तद्विशिष्ट प्रसिद्धो धर्मीत्यभिधानात् । तत्कथं सिद्धसाधने हेतोरनन्वयो वा स्यात् । यदपि मूलानुमानविषयापहारिण इत्यादिग्रन्थ- [illegible] । [illegible] प्रयुक्तेऽनुमानविरोधासम्भवात् । इति नास्तिकतिरस्कार ।

अज्ञातकर्तृकः

# ॥ वादचतुष्कः ॥

## १. अग्निशीतत्वस्थापनावादः

ॐ नमः । शीतो वह्निर्दाहकत्वात् । यद् यद् दाहकं तत्तच्छीतम् [ हिमवत् ] । दाहकश्च वह्निस्तस्मात् शीत एव । अथ सकलप्रज्ञालप्रवालचक्रवालावचूलैर्वाद्यते वादिशार्दूलैर्यथा—प्रत्यक्षविरुद्धाऽसौ प्रतिज्ञा । यतः समस्तैरपि जनैर्वह्नावुष्णत्वमेवोपलभ्यते । न शीतत्वलेशोऽपि । तन्न वाच्यम् यतः हेमन्तसमयवासरमुखव्यज्यमानार्द्रीकृततालवृन्तप्रान्तप्रोच्छलत्शीतशीकरासारशिशिरे वैश्वानरे उष्णत्वोपलब्धिर्भ्रान्तैव यथा विरहिणां सकलजननेत्रपात्रैकलेह्यमानमहसि चन्द्रमसि उष्णत्वप्रतीतिः ।

अथैवमुद्दण्डपुण्डरीकपाण्डुरनिजयश प्रसरदुग्धमकराकरान्तःपरिस्फुरत्पाण्डित्यादिगुणडिण्डीरपिण्डीकृतब्रह्माण्डभाण्डैर्वम्भण्यते विद्वत्प्रकाण्डै' यथा शीतद्युतावुष्णत्वप्रतीतेर्भ्रान्तत्वं भवतु बहुभिस्तच्छीतत्वोपलम्भात् । वह्नेस्तूष्णत्वं सर्वैरपि प्रतीयते न केनापि शीतत्वम् । तस्मात् प्रत्यक्षविरुद्ध' । इदमपि विचार्यमाणं न स्थेमानमाप्नोति । यतः निर्दोषाणां कुशीचाटनफालग्रहणादिदिव्य कुर्वतामनुस्मृतमन्त्राणां च हुताशने शीतत्वप्रतीति समस्त्येव ।

अथैवं निबिडजडिमवननिकुञ्जोज्जा(०ञ्जोद्धा) सनकुञ्जरै. प्रजल्प्यते यथा – कुशीचाटनफालग्रहणादिदिव्यं कुर्वतां देवतानुभावात् कृशानोः शीतत्वोपलम्भ' संभवति न पुनः स्वयं शीत' । यदि पुनः स्वयं शीत' स्यात् तत्कथं दोषवतां जिह्वास्फोटकदंष्ट्रिकादाहादीन्युपलभ्येरन् । तस्मादुष्ण एव [ । ] तदप्याशामात्रमेव । यतः यद्दोषवतां स्फोटकादिकमुपलभ्यते तदपुण्यानुभावेन तदीयदोषाविष्करणाय देवतादिवशात् सजायते न पुनर्वह्नेरौष्ण्यात् ।

अथानवद्यविद्याविबुधव्रतश्रेणिसंप्रीणनप्रफुल्लन्मल्लिकाभिः समुल्लप्यते विद्वन्मतल्लिकाभिः—यथा नाम दोषवतां स्फोटादिकं देवतादिभिस्तदीयदोषाविष्करणाय । परं यदि स्वाभाविकं वह्नेरुष्णत्वं नास्ति तत्कथं सर्वेषामपि जनानां वह्निससर्गे स्फोटकादिकमुत्पद्यमानं दरीदृश्यत इति । तस्मात् स्वभावेनाप्युष्ण एव श्रयितव्यः । तदेतदपि वाबद्यमानं न विदुषामानन्दसम्पदं सम्पादयति । यत नोष्णत्वं स्फोटकोत्पत्तिकारणम्, भिल्लातकराजिकादिसम्पर्केऽपि स्फोटकोत्पत्त्युपलम्भात् । न च तेषामुष्णत्वमस्ति । तन्न स्फोटकोत्पादकत्वेन वह्नेरुष्णत्व कल्पनीयमिति ।

अथैवं सार्वभौमयशसः प्रजल्पन्ति सुमनस.—यथा बहुभिर्वह्नेरुष्णत्वोपलभ्यमानत्वादुष्णत्वमेव तात्त्विकम्, शीतत्वोपलम्भो भ्रान्त एवेति । तदेतदपि न सुधीमतो धिनोति ।

न हि धत्तूरकभावितानां बहूनामपि लोष्टादिषु सुवर्णज्ञानं भ्रान्तं न भवति । श्रूयते च शास्त्रेषु लोकेषु च शतम् अप्यन्धानां न पश्यति । किञ्च, यदि बहूनामुपलम्भः प्रमाणं तर्हि ज्ञानमयामूर्तत्वादिलक्षणयथावस्थितात्मनः स्वरूपे योगिपरिज्ञानमप्रमाणं स्यात् । योगिव्यतिरिक्तैः समस्तैरपि जनैस्तथाविधस्यात्मस्वरूपस्यापरिज्ञानात् । न च स्तोकानामपि योगिनां ज्ञानम् अप्रमाणं भवति । तस्मात् स्वल्पानामपि यज्ज्ञानं सम्यग् भवति तदेव प्रमाणम् । ततश्च भवदादीनां शीतेऽपि वह्नौ उष्णत्वसंवेदनं भ्रान्तमेव ।

अथैवं प्रकटविकटकोपाटोपप्रकम्पमानतनूकैः प्रतिपाद्यते वावदूकैः यथा—अस्मदादीनां वह्नेरुष्णत्वग्राहक ज्ञान भ्रान्तमिति कथ निश्चियते । न हि सर्वज्ञमन्तरेणान्यस्यैवंजातीया शक्तिरस्ति । तदेतदपि प्रकटान्तर्वा(र्व्या)प्तितां भवतां प्रकटयति । यतो यथा ह्येकत्र-महानसादौ धूमधूमध्वजयोरविनाभावग्रहणे सति सर्वत्रायम् असर्वज्ञस्यापि निश्चयो भवति यथा यत्र धूमस्तत्र वह्निर्भवत्येवेति । तथाऽत्राप्येकज्ञानस्य विपरीतार्थग्राहकस्य भ्रान्तत्वं निश्चीयते । एवं तथा विपरीतार्थपरिच्छेदकत्वात् । यद् यद् विपरीतार्थपरिच्छेदकं तत् तत् भ्रान्तम् । यथा शुक्तिकाशकले रजतज्ञानम् । विपरीतार्थपरिच्छेदकं चैतत् । तस्माद् भ्रान्तमिति ।

अथैवं निगद्यते निरवद्यहृद्यगद्यपद्यप्रबन्धबन्धुराभिर्वाग्भिर्भवद्भिः—यथा शुक्तिकाशकले दूरदेशावस्थितत्वसदृशत्वादिकारणवशाद् रजतबुद्धिर्भवन्ती भ्रान्ता भवति । इह तु शीते वह्नौ उष्णत्वोपलब्धिः कुतः संजायते । इति न हि तावत् किमपि कारणमुपलभामहे येन भ्रान्तत्वं स्यात् । अतस्तस्माद् वह्नेरुष्णत्वसवेदनमभ्रान्तमेव । तदेतदपि वावद्यमान वसन्तसमयवन्न भवन्मनोरथमल्लिकावल्लिकां पल्लवयति । यतोऽनाद्यविद्यावासनावशात् तुषारकणशीतलेऽपि वह्नौ उष्णत्वबुद्धिर्भवतां बोभवीति यथा दुःखरूपेष्वपि विषयेषु सुखबुद्धिः कैश्चित्तु मन्त्रदेवतादिसान्निध्येन सकलपदार्थसार्थयाथात्म्यम् । तस्मात् प्रत्यक्षेणैवाशुशुक्षणे शीतत्वोपलम्भात् न प्रत्यक्षविरुद्धः पक्षः ।

नाप्यनुमानविरुद्धः । अथ प्रचण्डपण्डितप्रकाण्डमण्डलीमौलिमण्डनायमानैर्निरूप्यतेऽभिरूपप्रधानैः — यथा उष्णो वह्निर्दाहकत्वात् । यद् यद् दाहक तत् तदुष्णम् । यथा मार्तण्डमण्डलम् । दाहकश्चायम् । तस्माद् उष्ण एवेत्यनुमानेनानुमानविरुद्धोऽयम् । नन्वेतदपि विचारासहमेव । तथाहि प्रत्यक्षविरुद्धाऽसौ प्रतिज्ञा, वह्नेः शीतत्वस्य प्रत्यक्षपक्षविनिस्थापितत्वात् । अनुमानविरुद्धा नास्मदीया [प्रतिज्ञा] । अनुमाने न (च) हेतुरप्यनैकान्तिकः । हिमे शीते त्वपि (शीतेऽपि) दाहकत्वोपलम्भात् । दृष्टान्तोऽपि साध्यविकलः तस्यापि शीतत्वात् ।

अथानुमानमन्तरेण शीतत्वं नाङ्गीक्रियते तर्हि अनुमानमप्युच्यते । शीतं मार्तण्डमण्डलं पार्थिवत्वात् स्फटिकोपलादिवत् । अथैतद्दोषभीतैर्मार्तण्डमण्डलांशुवदिति दृष्टान्तान्तरमाश्रीयते । नन्वेवं सति दृष्टान्तान्तरप्रतिपत्तिलक्षणं दूषणं समापनीपद्येत भवताम् । किञ्च, किरणान्यपि शीतलान्येव । अत्राप्यनुमिमीमहे । शीतलानि मार्तण्डमण्डलांशूनि पार्थिवसंभवत्वाद् घटवत् । ततश्च दृष्टान्तान्तराश्रयणेऽपि न काचिदप्यर्थसिद्धिरभूत् । एवं च सति सोऽयमाभाणकः सत्यः सम्पन्नः—यथा काकोऽपि भक्षितोऽजरामरत्वमपि न सजातमिति । हेतुरपि नासिद्धः । विपर्ययसाधने दृष्टान्ताभावात् । नाप्यनैकान्तिकः । विपक्षे वृत्त्यभावात् । दृष्टान्तोऽपि न साध्यविकलः साधनविकलो वा, हिमे शीतत्वस्य दाहक[त्व]स्य च सकलजगत्प्रतीतित्वात् । तस्मात् सकलकलङ्कचक्रवालविकलानुमानेन स्वसाध्यं साध्यत एवेति स्थितम् ।

॥ अग्निशीतत्वस्थापनावादः ॥

*

* *

## २. सर्वज्ञव्यवस्थापकस्थलम्

इह केचिदज्ञानमहामहीधरभाराक्रान्तचेतस सकलविमलाकरलोकालोकविलोकिताशेषपदार्थसार्थस्य भगवतः सर्वज्ञस्य निराकरणार्थमित्थं प्रमाणपञ्चकाभावमुद्भावयन्ति । नास्ति सर्वज्ञस्तद्ग्राहकप्रमाणपञ्चकाभावात् खरविषाणवत् । न तावत् प्रत्यक्षं प्रमाणं सर्वज्ञसाधनायोत्सहते । तस्यातीन्द्रियत्वात् । प्रत्यक्षस्य च सदिन्द्रियविषयत्वात् । "सत्सम्प्रयोगे पुरुषस्येन्द्रियाणा बुद्धिजन्म तत् प्रत्यक्षम्" [मी०सू०१.१.४] इति वचनात् ॥१॥ नाप्यनुमानम् । तद्धि लिङ्गलिङ्गिनोरविनाभावग्रहणे सति प्रवर्तते । यथा महानसादावग्निधूमयोरध्यक्षेणायं धूमोऽग्निं विना न भवतीत्यविनाभावं विनिश्चित्य पश्चात् पर्वतनितम्बादौ गगनतलावलम्बिनीं बहुलधूमरेखामवलोक्य तत्कारणभूतस्याग्नेः प्रतीतिर्भवति । न चैव सर्वज्ञाविनाभूतं किञ्चिल्लिङ्गमुपलभामहे येन तत्कल्पना साध्वी स्यात् ॥२॥ नाप्युपमानं तत्साधनाय कक्षां बध्नाति, उपमानोपमेयसद्भावे प्रवर्तनात् । यथा नगरायातेन केनचित् कश्चिद् ग्रामवासी प्रपच्छे—कीदृशो गवय इति । स च प्रयुङ्क्ते—यथा गौः खरविषाणकुकुन्द(ककुत्)सास्नालाङ्गूलाद्यवयवसम्पन्नस्तथा गवयोऽपीति वचनाहितसस्कारस्य पश्चादटव्यां क्वचित् पर्यटतो गवयदर्शनात् तस्य विमर्शः प्रवर्तते यथा गौरुक्तलक्षणस्तथा गवयोऽयमिति

स प्रतिपद्यते। न चात्रामुकवत् सर्वज्ञ इति कल्पना युक्ता तथाविधस्य कस्यचिदभावात् ॥३॥ नापि शाब्दं प्रमाणं तदस्तित्वं साधयति। ततोऽपि तस्याप्रतिपत्तेः। तथाहि—यथा कश्चिद्दाहपाकाद्यर्थी कश्चिदविप्रतारकमप्राक्षीत्—क्वाग्निरस्ति। स चाभिधत्ते अस्मात् कूटात् परत्र प्रविभागे वह्निस्तिष्ठतीति वचनानन्तरं प्रवृत्तस्य जाज्वल्यमानज्वालाकलापाकुले दाहपाकाद्यर्थक्रियाक्षमे हुतभुजि प्रतीतिर्भवति। नैवं सर्वज्ञशब्दादाप्तप्रयुक्तादपि सर्वज्ञे प्रतिपत्तिस्तथा तददर्शनात् ॥४॥ नाप्यर्थापत्तिरत्र गमिका। सा हि कार्यनिष्पत्त्यन्यथानुपपत्तौ व्यवस्थाप्यते। यथा 'पीनो देवदत्तो दिवा न भुङ्क्ते'। पीनत्वस्यान्यथानुपपत्तेर्निशि भुङ्क्त इति गम्यते। न च सर्वज्ञसद्भावमन्तरेण कश्चिदर्थो नोत्पद्यते (नोपपद्यते) येन तद्भावदर्शनात् [तत्सिद्धिः भवेत्] ॥५॥ तस्मात् प्रमाणपञ्चकाभावादभाव एवात्र प्रवर्तत इति। उक्तं च—

प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते।
वस्त्वसत्तावबोधार्थं तत्राभावप्रमाणता ॥ [श्लो०वा०अभाव १]

तदेतद् पित्तज्वरोपरुद्धस्येव प्रलापमात्रम्। न पुनर्विवक्षितार्थसाधकमित्यपहस्तयितव्यम्। तथापि विद्वज्जनमनोरञ्जनाय किञ्चिदुच्यते। तत्र यत्तावन्नास्ति सर्वज्ञस्तद्ग्राहकप्रमाणपञ्चकाभावात् खरविषाणवदिति साधनमुपन्यस्तं तत्र प्रतिज्ञापदयोर्विरोधं प्रकटमेव लक्षयामः। तथाहि—यदि सर्वज्ञो, नास्ति कथम्; नास्ति चेत्, सर्वज्ञः कथमिति। अथेत्थमाचक्षीथा—'परैः सर्वज्ञोऽभ्युपगम्यते—तेषामनिष्टसम्पादनार्थं सर्वज्ञ इत्युच्यते'। तर्हि भवन्तं पृच्छामः परकीयोऽभ्युपगमो भवता प्रमाणमप्रमाणं वा स्यादिति। यदि प्रमाणं तर्हि परैः सर्वज्ञस्याभ्युपगमकत्वान्निर्मूलतया तावकीनं प्रमाणं त्वाभिमतं (प्रमाणत्वाभिमत) साधनमप्रमाणताकोटिमारोहतीति। अथाप्रमाणं तर्हि प्रतिज्ञापदयोर्विरोधस्तदवस्थ एवावतिष्ठते। तथा हेतुरप्याश्रयासिद्धः प्रमेयाभावात्।

अथ पर्याकुलितचेतोवृत्तिरेवं ब्रूयात् परिकल्पनाकृतप्रमेय इति तर्हि सा विद्यमानस्याविद्यमानस्य वेति विकल्पौ जन्मान्तरोपात्तधर्माधर्माविवाव्याहतप्रसरौ पुरतोऽवतिष्ठेते। यदि विद्यमानस्य [तर्हि] व्यर्था परिकल्पना। तामन्तरेणापि तस्य विद्यमानत्वात्। विद्यमानस्यापि यदि परिकल्पना तदाऽतिप्रसङ्गो वेदस्यापि कल्पनापत्तेः। ततश्च प्रमाणोपन्यासेनापि प्रतिक्षेप्तुमशक्यत्वेन विपरीतसाधनाद्विरुद्धश्च स्यात्। अथाविद्यमानस्य कल्पनाऽभिप्रेयते। एवं च सति न कश्चिदपि हेतुराश्रय(या)सिद्धिमास्कन्देत्। तथासति अनित्यः शब्दश्चाक्षुषत्वादित्यादेरपि गमकत्वप्रसङ्गः। तत्रापि कस्यचिद्धर्मिणः कल्पयितुं शक्यत्वात्।

किञ्च, प्रमाणपञ्चकाभावः किं ज्ञातः सर्वज्ञाभावं साधयेदज्ञातो वेति कलहंसयुगलमिव विमलविकल्पयुगलमवतरति। यदि ज्ञातः कुतो ज्ञप्तिरिति वाच्यम्। अपरप्रमाणपञ्चकाभावात् चेत् सोऽपि कुतो ज्ञात इति निर्लज्जकुट्टिनीवानवस्था पश्चाद्धावन्ती दुर्निवारा स्यात्। अथ प्रमेयाभावात् प्रमाणाभावस्तर्हि प्रमेयाभावे [प्रमाणाभावः] प्रमाणाभावे च प्रमेयाभाव इति समुद्रोदकवद् दुस्तरमितरेतराश्रयत्वं समापनीपद्येत। अथाज्ञातस्तर्हि, अविशेषेणाविद्वदङ्गनादीनामपि सर्वज्ञाभावं गमयेन्न चैतत्, गृहीतसङ्केतस्यैव तदभावप्रतिपत्त्यभ्युपगमादिति। स्वरूपस्यापि ज्ञातुमशक्यत्वात् स्वरूपासिद्धश्च। तथा खरविषाणस्यापि दृष्टान्तत्वेनोपन्यस्तस्यापरदृष्टान्तमन्तरेणासिद्धेरन्यदृष्टान्तोपन्यासापत्तिस्तत्राप्ययमेव वृत्तान्त इत्यपर्यन्ताऽनवस्था स्यात्।

अथ स्वत एव खरविषाणस्याभावसिद्धिस्तर्हि तद्वत् सर्वज्ञस्यापि सा भविष्यति। किमनर्थमूलेन दृष्टान्तोपन्यासेनेति। तदेवं प्रत्यवयव विचार्यमाणः साधनं जीर्णकुटीरमिव विशीर्यत इत्युपेक्षामर्हति।

किञ्च, किं भवत एव तद्ग्राहकप्रमाणपञ्चकाभावः किं वा सर्वेषां प्रमातॄणामिति विकल्पद्वय भीमार्जुनद्वयमिव प्रतिपक्षपक्षविक्षोभदक्षमुपतिष्ठते। यदि भवतः, सिद्धं साध्यते, भवतो महामोहान्ध्याभिभूतत्वाद् यद्वचनाच्च तदपनोदो भवति तस्य च भगवतः सर्वज्ञस्यानु(न)भ्युपगमात्। अथ सर्वेषा तदसिद्धम्, तस्य हि एतद्वक्तुं युज्यते यस्य भुवनोदरान्तरवर्तिप्राणिपरिषच्चेतोवृत्तिः प्रत्यक्षा भवति, न भवतः। तत्प्रत्यक्षीकरणे च तवैव सर्वज्ञत्वप्राप्तिरिति सिद्धं नः समीहितम्। य एव राधावेधं विधत्ते स एवार्जुन इति।

अथानुमानान्तरं सङ्कीर्यते—यो यः पुरुषः स सर्वज्ञो न भवति पुरुषत्वादस्मदादिवदित्येतदपि नदीस्रोतोऽन्तःप्र(प्ल)वतः कुशकाशावलम्बनप्रायम्। पुरुषत्वस्यैकान्तेनास्मदादिसादृश्यसाधकत्वानुपपत्तेः। तथाहि पुरुषत्वाविशेषेऽपि मूर्खविपश्चिदादिभेदः सलक्ष्यते। तद्वत् कश्चित् सर्वज्ञोऽपि भवष्यति।

अथ विकल्पाभ्यां प्रत्यवतिष्ठेथाः—स सर्वं जानन् किमिन्द्रियद्वारेण जानाति तदन्तरेण वा। प्रथमपक्षेऽक्षाणां सन्निहितार्थग्राहित्वान्मकराकरादीनां च व्यवहितत्वादज्ञाने सर्वज्ञत्वहानिः अदृष्टमुद्गरक(रपात)कल्पा स्यात्। द्वितीये त्वन्धबधिरादीनामपि सर्वज्ञत्वप्राप्तिरित्येतदप्यनभ्युपगमवज्रपातनिर्दलितमस्तकत्वान्नोत्थातुमुत्सहते। तस्यातीन्द्रियज्ञानाभ्युपगमात्। यो य पुरुषस्तस्यातीन्द्रियं [ज्ञानं] नास्ति पुरुषत्वादस्म-

दादेरिवेति चेत् तर्हि तावकेनानुमानेन किमिदानीं तथाभाव साध्यते किं वा कालत्रयेऽपीति दन्तिदन्तयुगलमिवामल विकल्पद्वयमापतति । यद्यधुना, सिद्धं साध्यते । कालत्रये चासिद्धम्, कालत्रयस्याप्रत्यक्षत्वात्, कस्मिश्चित् काले तथाभूतस्यापि सम्भवात् ।

अथ यो यः कालः स सोऽतीन्द्रियज्ञानवच्छून्यः कालत्वादिदानींतनवदित्यनुमानप्रत्यवस्थानं कुर्वीथास्तर्हि यो य' कालः स मत्त्वत्पितामहादिशून्यः कालत्वादिदानींतनकालवदिति नास्माकमपि सर्वोत्तरमतिदुर्लभं (८) स्यादित्यनिष्टप्राप्तिः । अभ्युपगमे च भवतो निर्हेतुकं जन्म स्यात् ।

अथैवं पर्यनुयुञ्जीथाः किमेते भावा इन्द्रियज्ञानग्राह्यस्वभावा उतातीन्द्रिज्ञानग्राह्यस्वभावाः । आद्यपक्षे प्रतिज्ञाहानि· भवद्विवक्षितस्यातीन्द्रियज्ञातृत्वेनाभ्युपगमात् । द्वितीयपक्षे तु प्रतीतिवाधाऽक्षज्ञानेन तेपां वेद्यमानत्वात् । एतदपि जलभृतकुम्भस्योदकविन्दुरिव वहि प्लवते । तेपामनेकस्वभावत्वेनातीन्द्रियज्ञानेनापि ग्राह्यमाणत्वात् । अनेकस्वभावत्वं चेन्द्रियज्ञानेनापि भेदेन ग्रहणदर्शनात् । यदि पुनः सर्वथैकस्वभावा भावा भवेयुः तदेन्द्रियज्ञानेनापि भेदो न स्यात् । स च दृश्यते । एकस्मिन्नेव वस्तुनि मन्दचक्षुषा संस्थानमात्रस्य, विमललोचनेन तुतदधिकस्य रक्तत्वादे' प्रतिपत्तेरिति । अतीन्द्रियज्ञानसद्भावश्चाविसंवादिज्योति'शास्त्रादिप्रणयनान्यथानुपपत्त्या निश्चीयते । तदन्तरेण तथाविधस्यानुपपत्तेरिति ।

किञ्च, सर्वज्ञाभावोऽपि कथ प्रमाणपञ्चकेन गृह्यत इति चिन्त्यम् । प्रत्यक्षस्य सदिन्द्रियविषयत्वेनाभावग्रहणाभावाद् भावे चाभावप्रमाणवैयर्थ्यं तेनैव तद्विषयस्य परिच्छिन्नत्वात् । अनुमानस्यापि लिङ्गलिङ्गिग्रहणसम्बन्धस्मरणोत्तरकालप्रवृत्तेरभावस्य तुच्छत्वेन भावतोऽभावात्, भावे वा अभावत्वविरोधात् । उपमानस्याप्युभयसद्भावे भावात् सर्वज्ञस्य चाभावरूपेणाभ्युपगमात् । भावाभावयोश्चोपमानोपमेयाभावात् । भावरूपत्वे च विद्यमानत्वेनैव ग्रहणात् खरविषाणवत् सर्वज्ञ' सर्व[ज्ञ]वद्वा खरविषाणमित्युपमानोपन्यासः प्रलापमात्रफल एव स्यात् । शब्दस्यापि विधिसाधकत्वेनैव प्रमाणताभ्युपगमात् । यथा 'अग्निहोत्रं जुह्या(हुया)त् स्वर्गकाम'' इत्यादे' । न च सर्वज्ञाभावमन्तरेण कश्चिदर्थो नोपपद्यते येन तदभाव स्यादित्यर्थापत्तेरविनाभावसाधकत्वमिति । अत एव साधकवाधकप्रमाणाभावात् संशयोऽस्त्विति चेन्न साधकप्रमाणस्य विद्यमानत्वात । तथाहि—अस्ति कश्चिदतीन्द्रियार्थसाक्षात्कारी । अनुपदेशालिङ्गाविसंवादिविशिष्टदिग्देशकालप्रमाणात्मकचन्द्रादिग्रहणाद्युपदेशदातृत्वात् । यो यद्विषयेऽनुपदेशालिङ्गाविसंवादाद्युपदेशदासामतशाद्यपकारीदृष्टो (द्युपदेशदायी

सं तत्साक्षात्कारो दृष्टो) यथाऽस्मदादिः स्वयमनुभूतेऽर्थेऽनुपदेशालिङ्गाविसंवादाद्युपदेश दायी तत्साक्षात्कारी। अनुपदेशालिङ्गाविसंवादादिविशिष्टदिग्देशकालप्रमाणात्मकचन्द्रादिग्रहाद्युपदेशदायी च कश्चित्तस्मात् तत्साक्षात्कारी। न चायमसिद्धो हेतुः। अनुपदेशालिङ्गाविसंवाद्युपदेशस्यास्मदादिष्वपि अविगानेन विद्यमानत्वान्नाप्यनैकान्तिकस्तथाविधोपदेशदायित्वस्यासाक्षात्कारित्वतः सर्वथा निवृत्तेः, ततो व्यावृत्तत्वादेव च न विरुद्ध इति। एवंभूतश्च सर्वज्ञ एव।

तथाविधोपदेशस्य वृद्धपरम्परातः समायातत्वादसिद्धं तत्साक्षात्कारित्वमिति चेन्न तेषां रागादिमत्त्वेन तथाविधोपदेशदानाभावात्। अत एव क्वचिदन्यथा प्ररूपणात्। दृश्यन्ते च क्वचित् परप्रतारकाः पुंमांसोऽन्यथा विचिन्त्यान्यान्यशब्दप्रयोगं कुर्वाणाः—'नद्यास्तीरे गुडशकटं पर्यस्तं धावत डिम्भकाः' इत्यादिवत्। तथाप्यतान्त(प्यान्तर)रागादिविश्लेषोऽस्यायुक्तः पुरुषत्वादिति चेन्नात्यन्तोच्छेदसद्भावे प्रमाणोपपत्तेः। तथा हि—रागादयः कस्यचिदत्यन्तमुच्छिद्यन्ते। उत्कर्षापकर्षकत्वात्। प्रदीपज्वालावत्। यथा हि वातादिना प्रदीपादेरत्यन्तोच्छेदो भवत्येवं क्वचित् पुंसि विपक्षभावतो रागादीना निर्मूलोच्छेदो भविष्यति। यदि च तथाविधः पुरुषो नाङ्गीक्रियते तदा रागादिमता वेदार्थस्य विज्ञातुमशक्यत्वात् वेदस्य स्वत एव स्वकीयार्थापरिज्ञानान्न वेदार्थे याथात्म्यनिश्चयः। तथा 'अग्निहोत्रं जुह्या(हुया)त् स्वर्गकामः' इत्यादेर्वाक्यस्य 'मांस भक्षयेत् स्वर्गकामः' इत्यप्यर्थः कस्मान्न [भ]वति निया[म]काभावात्। भावे च नियत पौरुषेयतासिद्धिः। वेदस्य स्वत एव प्रमाणान्न पौरुषेयत्वमिति चेन्न पदवाक्यरचनाविशिष्टस्यापौरुपेयत्वासिद्धे। यत् पदवाक्यरचनाविशिष्टं शास्त्रं [तत् पौरुषेयम्]। तथाभूतं चैतत्। तस्मात् पौरुषेयमेतत्। एवं प्रमाणपञ्चकाभावस्याभावसाधकत्वानुपपत्तेः

प्रमाणपञ्चक यत्र वस्तुरूपे न जायते।
वस्त्वसत्तावबोधार्थं तत्राभावप्रमाणता॥ [श्लो० वा० अभाव १]

इति शब्दगुडमात्रं विवक्षितार्थरहितत्वात्। न च प्रमाणपञ्चकाभावो लोकेऽप्येकान्तेनाभावं साध[य]ति। समुद्रोदकसिकतादिपरिसङ्ख्यानेन व्यभिचारात्।

अथेत्थमभिधत्से किमिदं सर्वज्ञविज्ञानं निराकारमाहोस्वित् साकारम्। यदि निराकार न तेनार्थपरिच्छेदः। साकार चेत् तदपि किं स्वाकारमुतार्थाकारमिति विकल्पौ राग-द्वेषाविवा[भि]प्रेतार्थव्याघातकारानुधावत। यदि स्वाकारं पूर्वो दोष.। अर्थाकारं चेत् तर्ह्यर्थानामानन्त्याद् भिन्नजातीयत्वाच्च तच्छब-

लरूपप्राप्त्या नैकस्याप्यर्थस्य याथात्म्यग्रहणं स्यात् । नैतदपि चतुरचेतसि चारु चकास्ति । विज्ञानस्यार्थस्य ग्रहणाभ्युपगमात् । यदि ह्यर्थो विज्ञाने स्वाकारमर्पयन्तीत्यभ्युपगम्यते तदेव दोषोऽनुपद्येत । यदा च विज्ञानमेवार्थग्राहकत्वेन पारणमिति(परिणमति) तदा दूषणं कथं स्यात् । तत्परिणामश्च वस्तुनोऽनेकस्वभावा-दन्यथा(था)ऽर्थपरिच्छेदानुपपत्ते । तथाप्यतीतानागतार्थग्रहणमनुपपन्नमसत्त्वात् तेषामिति चेन्न सर्वथाऽसत्त्वानु(न)भ्युपगमात् । सत सर्वथाऽसत्त्वानापत्तेरसतश्चोत्पत्ति-प्राप्तेः । तदा तेषामेव वर्तमानत्वात् । वर्तमाना एव हि भावास्तथापरिणामेनातीतादि-व्यपदेशभाजो भवन्तीति । अन्यथा वर्तमानस्याप्यनुपपत्तिरिति भूत-भवत्-भविष्यत्-सकलपदार्थतत्त्वाववोधकः सुव्यवस्थितः सर्वज्ञ इति ।

॥ सर्वज्ञव्यवस्थापकस्थलम् ॥

*

* *

## ३. चीवरस्थापकस्थलम्

एगया अचेलओ होई सचेले आवि एगया ।

एयं धम्महियं नच्चा नाणी नो परिदेवए ॥ [उत्तरा० २.१३]

इति महार्थकर्मप्रवादपूर्वोद्धृतपरीषहाधीतम् ।

सम्यक्त्वज्ञानशीलानि तपश्चेतीह सिद्धये ।
तेषामुपग्रहार्थाय स्मृत चीवरधारणम् ॥
जटी कूर्ची शिखी मुण्डी चीवरी नग्न एव च ।
तप्यन्नपि तपः कष्ट मौढ्यार्द्धिस्रो न शुद्ध्यति ॥
सम्यग्ज्ञानी दयावास्तु ज्ञानी यस्तप्यते तपः ।
नग्नश्चीवरधारी वा स सिद्ध्यति महामुनि ॥

इति वाचकवचनानूदित सचेलत्वमनुचित केचिदाहुस्तन्न । इह यो यदर्थी स न तन्निमित्तोपादानं प्रत्यनाद्रते । यथा घटार्थी मृत्पिण्डोपादान प्रति । चारित्रा-र्थिनश्च यतयस्तन्निमित्त च चीवरम् । न चास्यासिद्धत्वम् । तद्धि तस्य तदनिमि-त्तता स्यात । सा च तत्र तस्य बाधाविधायितया औदासीन्येन वा । न तावद्बाधा-विधायितया, यतोऽसौ पञ्चमव्रतविघातकतया ससक्तिविषयतया दोषकारणत्वेन वा । यदि पञ्चमव्रतविघातकत्वेन तदपि कुतो 'युक्तित इति चेन्नन्वियं स्वतन्त्रा सिद्धान्ताधीना वा । यदि स्वतन्त्रा तर्हि 'सलोमा मण्डूकश्चतुष्पाञ्वे(पादे) सति

उत्प्लुत्य गमनात् । हरिणवत् । अलोमा वा हरिणश्चतुष्पाञ्वे(पादे) सत्युत्प्लुत्य गमनात् । मण्डूकवत्' इतिवन्निर्मूलयुक्तेः साध्यसाध्य(ध)कत्वं कथम् । उक्तं च—

यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः ।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥ [वाक्यप० १ ३४]

सिद्धान्तयुक्तिस्तु तदभावादसम्भविनी । अथास्त्यसौ 'गामे वा नगरे वा अप्पं वा बहुं वा जाव नो परिगिण्हेज्जा' इत्यादिस्तदनुगृहीता युक्तिश्च 'यद् यत् परिग्रह-स्वरूपं तत् तदुपादीयमानं पञ्चमव्रतविघातकम् । यथा धन-धान्यादिकम् । परिग्रह-स्वरूपं च चीवरम् ।' नन्वसिद्धो हेतुरयम् । तथाहि—परिग्रहहेतुत्वं किं मूर्च्छाहेतु-त्वेन धारणामात्रेण वा । यदि मूर्च्छाहेतुत्वेन शरीरमपि मूर्च्छाया हेतुर्न वा । न तावदहेतुस्तस्यान्तरङ्गत्वेन दुर्लभतया च विशेषतस्तद्धेतुत्वात् । उक्तं च—

अह कुणसि थुल्लवत्थाइएसु मुच्छं धुवं सरीरम्मि
अक्केज्जदुल्लभतरे काहिसि मुच्छं विसेसेणं ॥ [विशेषा०भा[१]०३०४७]

अथास्तु तन्निमित्तमेतत् । तर्हि चीवरवत् तस्यापि किं न प्रथमत एव त्यागो दुस्त्यजत्वेन मुक्त्यङ्गतया वा ? दुस्त्यजत्वेन चेत् तदपि परिहार्यम् । मुक्त्यङ्गतये-त्याश्रयणे च किं चीवरेणापराद्धम् ? तस्यापि तथाविधशक्तिविकलानां शीतकालादिषु स्वाध्यायाद्युपष्टम्भेन मुक्त्यङ्गत्वात् । अभ्युपगम्य च मूर्च्छाहेतुत्वमुच्यते । न हि निगृ-हीतात्मनां कचिन्मूर्च्छाऽस्ति । तदुक्तम्—

सव्वत्थुवहिणा वुद्धा संरक्खणपरिग्गहे ।
अवि अप्पणो वि देहम्मि नायरंति ममाइयं ॥ [दशवै० ६.२२]

नापि धारणामात्रेण । एवं शीतकालादौ प्रतिमाप्र[तिप]त्त्यादौ केनचिद्भक्त्यादिनोप-रिक्षिप्तस्यापि चीवरस्य परिग्रहताप्रसङ्ग' । अथ तत्र स्वयं ग्रहणाभावाददोषः । यदि स्वयंग्रह' परिग्रहहेतुस्तर्हि कुण्डिकाद्यपि नोपादेयम् । दृष्टेष्टविरोधि चेदम् । अथ तत्र मूर्च्छाया अभावादपरिग्रहत्वम् । एवसति सयमरक्षणायोपादीयमाने चीवरे को दोष' । उक्तं च—

जंपि वत्थं च पायं वा कंबलं पायपुंछणं ।
तं पि संजमलज्जट्ठा धारंति परिहरंति य ॥ [दशवै० ६.२०]

अथ संसक्तिविषयतया । यद्येवमाहारे सा किमस्ति न वा ? न तावन्नास्ति । कृमिगण्डूपदाद्युत्पादस्य तत्र प्रतिप्राणि प्रतीतत्वात् । अथास्ति परं यतनया न दोष-स्तदितरत्रापि तुल्यम् । कषायकारणत्वेन चेत् तत् किमात्मनः परेषां वा । यद्यात्म-

---

१. ला. द विद्यामदिरसस्करणम् ।

नस्तदा श्रुतमपि केषाञ्चिदहङ्कारहेतुत्वेन कषायकारणमिति तदपि नोपादेयं स्यात्। अथ विवेकिनां न तदहङ्कृतिहेतु'। 'प्रथमं ज्ञान ततो दया' इति नीतितो धर्मोपकारि चेति तदुपादानम्, चीवरेऽपि समानमेतत्। अथ चीवरस्य धर्मानुपकारितयाऽतुल्यता। ननु कुत एतदवसितम्। किमचीवरास्तीर्थकृत इति श्रुतेस्त जिनकल्पाऽऽकर्णनात्, 'जिताचेलपरीषहो मुनि' इति वचनाद्वा। न तावदाद्यो विकल्प.। तीर्थकृता हि अचीवरत्व कदाचित् सर्वदा वा। क(का)दाचिके को वा किमाह। कदाचिदस्माकम-प्यभिमतत्वात्। अथ सर्वदा, तन्न 'सव्वे वि एगदूसेण निग्गया जिणवरा चउव्वीसं' [आ० २०६] इति वचनात्। तत्र 'एक(ग)दोसेण' त्ति पाठः। सर्वेऽपि ससा[र]दोषेण एकेन निर्गता इति कृत्वा। नन्वेवमनवस्था। सर्वत्र सर्वैरपि स्वेच्छारचितपाठानां सुकर-त्वात्। किञ्च, तीर्थकृतामचीवरत्वे तेषामेव तद् धर्मोपकारीति निश्चयोऽस्तु नापरेषाम्। न हि यदेव तेषा धर्मोपकारि तदेवेतरेषामपि। अन्यथा यथा न ते परोपदेशत. प्रवर्तन्ते यथा च छद्मस्थावस्थायां परोपदेशं दीक्षां [च] न प्रयच्छन्ति तथान्यैरपि विधेयमिति मूलोच्छेद एव तीर्थस्य। उक्तं च—

ण परोवएसविसया न उ छउमत्था परोवएसं पि।<br>
दिंति न य सीसवग्गं दिक्खंति जिणा जहा सव्वे ॥<br>
तह सेसेहि वि सव्वं कज्जं जइ तेहि सव्वसाहम्मं।<br>
एवं च कओ तित्थं न चेदचेलो त्ति को गाहो ? ॥ [विशेषा०भा०३०७१–७२]

अथ जिनकल्पाऽऽकर्णनात्। तत्र हि न किञ्चिदुपग(क)रणमिति चीवरस्याप्य-भावस्तथा च तस्य न धर्मोपकारिता। ननु जिनकल्पिकानामुपकरणाभाव आगमत' प्रवादतो वा। न द्वितीयो, न हि 'वसति किल वृक्षे रक्ष'' इत्यादिनिर्मूलप्रवादानां प्रमाणता। नाप्यागमस्तेषामपि शक्त्यपेक्षयोपकरणप्रतिपादनात्। तदुक्तं—

जिणकप्पिआदयो पुण सोवधओ सव्वकालमेगंतो।<br>
उवगरणमाणमेसिं पुरिसाविक्खाय बहुभेअं ॥ [विशेषा० भा० ३०६७]

अथवा अस्तु जिनकल्पिकानामुपकरणाभाव(वो) धृतिशक्तिसंहननश्रुतातिशय-युक्तानामेव तत्प्रतिपत्ति', अथ रथ्यापुरुषाणामपि। यद्याद्यो विकल्पस्तर्हि एवंविधा' सम्प्रत्यपि सन्ति न वा। सन्ति चेदुपलब्धिलक्षणप्राप्ता उपलभ्येरन्। अनुपलब्धिलक्षण-प्राप्ताश्च कुत' सत्त्वेन निश्चीयन्ते। अथ न सन्ति तर्हि तादृशामेव जिनकल्पप्रत्तिपत्ति रिति वृथैव —

मण-परमोहि-पुलाए आहारग-खवग-उवसमे कप्पे।<br>
संजमतिय-केवलि-सिज्झणा य जंवुम्मि वोच्छिन्ना ॥ [विशेषा०भा०३०७६]

इत्याप्तवचनानाश्रयणम् । यदि तु रथ्यापुरुषाणामपीति कल्प्यते तिरश्चामपि तत्कल्पनाऽस्तु । अथ देशविरतिभाज एव ते इति न तेषां तत्प्रतिपत्तिस्तर्हि सर्वविरतिस्तत्कारणम् । तथा च तद्व्रता एकेन यद् कृतं तत् किमखिलैः कर्तव्यं, तथाविधशक्तियुक्तैर्वा ? यद्याद्यस्तदा एकस्मिन्नपि मास-षण्मासादिकतपश्चरणेऽपरैरपि तदाचरणीयं स्यात् । अथ द्वितीयः पक्षस्तर्हि जिनकल्पोऽपि तथाविधशक्तियुक्तैरेव प्रतिपत्तव्यः । तथाविधशक्तिविकलानां च तत् तपश्चरणं बहुतरदोषायेति न तत् तपश्चरणीयम् । तद् वस्त्रेऽपि समानं भवत्येवेदानींतनयतीनां तथाशक्तिसंहननविकलतया हिमकणानुक्तशीतादिषु बहुतो बहुतो दोषहेतुकमग्न्यारम्भादिकम् । आह च वाचकः —

शीतवातातपैर्दंशमशकैश्चापि खेदितः ।
मा सम्यक्त्वादिषु ध्यानं न सम्यक् सविधास्यति ॥ [          ]

यच्च 'जिताचेलपरीषहो मुनिः' इति वचनतो न चीवरं धर्मोपकीति(धर्मोपकारीति) । तत्र जिताचेलपरीषहत्वं चेलाभावेनैवाहोस्विदेषणाशुद्धतत्परिभोगेनापि । यदि चेलाभावेनैव ततः क्षुत्परीषहजयनमप्याहाराभावेनैवेति व्रतग्रहणकाल एवानशनमायातम् । एतच्च तवापि न समतम् । ततः परिशुद्धोपभोगितयापि जिताचेलपरीषहत्वमिति द्वितीय एव पक्षः । स चास्मत्पथवर्त्येवेति न कुतोऽपि चीवरस्य धर्मानुपकारित्वनिश्चयः । अथ परेषां कषायकारणत्वेन चारित्रबाधकत्वं चीवरस्य, तर्हि धर्मादयोऽपि कस्यचित् कषायकारणं न वा ? न तावन्न तेऽपि कस्यचित् कषायकारणमिति चीवरत्वेऽपीति । उक्तं च–

अत्थि व कि किं वि जए जस्स व तस्स व कसायबीजं जं ।
वत्थू न हुज्ज एवं धम्मो वि [तुमे ण] वेत्तव्वो ॥
जेण कसायनिमित्तं जिणो वि गोसालसगमाईणं ।
धम्मो धम्मपरा वि य पडिणीआणं जिणमयं च ॥ [विशेषा० भा० ३०४२-४३]

अथैषां मुक्त्यङ्गतया कषायहेतुत्वेऽपि न हेतुता, तदिहापि समानम् । उक्त च वाचकसिद्धि(द्ध?)सेनेन

मोक्षाय धर्मसिद्ध्यर्थं शरीरं धार्यते यथा ।
शरीरधारणार्थं च भैक्षग्रहणमिष्यते ॥
तथैवोपग्रहार्थाय पात्रचीवरमिष्यते ।
जैनैरुपग्रहः साधोरिष्यते न परिग्रहः ॥ [          ]

औदासीन्येनापि न चीवरस्य चारित्रं प्रत्ययनिमित्तता तस्य तदुपकारित्वात् । यच्च यत्रोपकारि न तत् तस्मिन्नुदासीनम् । यथा तन्त्वादयः पटे । चारित्रोपकारि च चीवरम्, तथ'हि—सयमात्मकं चारित्रम् । न त्वत(त्वेत)स्य तत्परिहारेण शुद्धिरस्ति । आगमश्च—

किं संजमोवयारं करेइ वत्थाइ जति मई सुणसु ।
सीअत्ताणं ताणं जलणतणगताण सत्ताणं ॥
तह निसि चाउक्कालं सज्झायज्झाणसाहणमिसीणं ।
महिमहियावासोसारयातिरक्खानिमित्तं च ॥ [विशेषा० भा० ३०५८–५९]
जो वि दुवत्थ-तिवत्थो एगेण अचेलगो वि संथरइ ।
न हु ते हीलति परं सव्वे वि अ ते जिणाणाए ॥[1]

इत्यत. स्थितमेतत् चारित्रनिमित्तं चीवरमिति । नासिद्धता हेतो' । विरुद्धानैकान्तिकते चेतत्का(च तर्का)नुसारत' परिहर्तव्ये । ततश्च—

'निर्ग्रन्थानाममलज्ञानयुतैस्तीर्थकृद्भिरुक्तानि ।
सम्यग्व्रतानि यस्मान्नैर्ग्रन्थ्यमतः प्रशंसन्ति ॥
रागाद्यपचयहेतुर्नैर्ग्रन्थ्यं स्वप्रवृत्तितस्तेषाम् ।
तद्वृत्तिरतोवश्यं वस्त्रादिपरिग्रहयुतानाम् ॥'

इत्यादि दुर्मतिस्पन्दितमकर्णनीयम् ।

गरीयस्त्वा[त्] सचेलस्य धर्मस्यान्यैस्तथागतै. ।
शिष्यस्य प्रत्ययाच्चैवं वस्त्रं दध्रेत लज्जया ॥

॥ इति चीवरस्थापकस्थलम् ॥

*

* *

## ४. ईश्वरोत्थापकस्थलम्

॥ॐ॥ ईश्वरवादिन' ईश्वरस्य जगत्कर्तृत्वस्थापनार्थमित्थं प्रमाणयन्ति । क्षित्यादिकं बुद्धिमत्कर्तृकं कार्यत्वाद घटादिवदिति । न चायमसिद्धो हेतु' । क्षित्यादेः सावयवत्वेन कार्यत्वप्रसिद्धे । तथाहि—उर्वीपर्वततर्वादिकं सर्वं कार्यं सावयवत्वाद्

---

१ तुलनार्थं द्रष्टव्यम्-बृहत्कल्पभाष्यगाथा ३९८४, निशीथभाष्यगाथा ५८०७ ।

घटवत् । नापि विरुद्धो निश्चितकर्तृके घटादौ कार्यत्वदर्शनात् । नाप्यनैकान्तिको निश्चिताकर्तृकेभ्यो व्योमादिभ्यो व्यावर्त्तमानत्वात् । नापि कालात्ययापदिष्टः प्रत्यक्षागमाबाधितविषयत्वात् । न च वाच्यं घटकर्त्रादिदृष्टान्तदृष्टासर्वज्ञत्वासर्वकर्तृत्वादिधर्मानुरोधेन सर्वज्ञादिविशेषणविशिष्टसाध्यविपर्ययसाधनाद् विरुद्धो हेतुर्दृष्टान्तश्च साध्यविकलः घटादौ तथाभूतबुद्धिमतोऽभावादिति । यतः साध्य-साधनयोर्विशेषेण व्याप्तौ गृह्यमाणायां सकलानुमानोच्छेदप्रसक्तिः । किन्तु सामान्येनान्वयव्यतिरेकाभ्यां हि व्याप्तिरवधार्यते, तौ चानन्त्याद् व्यभिचाराच्च विशेषेपु ग्रहीतुं न शक्यौ । तेन बुद्धिमत्पूर्वकत्वमात्रेण कार्यत्वस्य व्याप्तिः प्रत्येतव्या न शरीरत्वादिना । न खलु कर्तृत्वसामग्र्यां शरीरमुपयुज्यते । तद्व्यतिरेकेणापि ज्ञानेच्छाप्रयत्नाश्रयत्वेन स्वशरीरकरणे कर्तृत्वोपलम्भात् । अकिञ्चित्करस्यापि सहचरत्वमात्रेण कारणत्वे वह्नेः पैङ्गल्यस्य धूमं प्रति कार[ण]त्वप्रसङ्गः स्यात् । विद्यमानेऽपि हि शरीरे ज्ञानादीना समस्तानां व्यस्ताना वाऽभावे कुलालादावपि कर्तृत्वं नोपलभ्यते । प्रथमं हि कार्योत्पादककारणकलापज्ञानं ततः करणेच्छा ततः प्रयत्नस्तत फलनिष्पत्तिरित्यमीषां त्रयाणां समुदितानामेव कार्यकर्तृत्वे सर्वत्राव्यभिचारः । सर्वज्ञता चास्याखिलकार्यकर्तृत्वात् सिद्धा । प्रयोगोऽत्र—ईश्वरः सर्वज्ञोऽखिलक्षित्यादिकार्यकर्तृत्वात् । यो हि यस्य कर्ता स तदुपादानाद्यभिज्ञः, यथा घटोत्पादकः कुलालो मृत्पिण्डाद्यभिज्ञः, जगतः कर्ता चायम्, तस्मात् सर्वज्ञ इति । उपादानं हि जगतः पार्थिव-आप्य तैजस-वायवीयलक्षणाश्चतुर्विधाः परमाणवः, निमित्तकारणमदृष्टादि, भोक्ताऽत्मा, भोग्यं तन्वादि । न चैतदनभिज्ञस्य क्षित्यादौ कर्तृत्वं सभवत्यस्मदादिवत् । ते च तदीयज्ञानादयो नित्याः, कुलालादिज्ञानादिभ्यो विलक्षणत्वात् । एकत्व च क्षित्यादिकर्तुरनेककर्तृणामेकाधिष्ठातृनियमितानां प्रवृत्त्युपपत्तेः सिद्धम् । सिद्धा हि स्थपत्यादीनामेकसूत्रधारपरतन्त्राणां महाप्रासादादिकार्यकरणे प्रवृत्तिः । न च—ईश्वरस्यैकरूपत्वे नित्यत्वे च कार्याणां कादाचित्कत्व वैचित्र्यं च विरुद्ध्यते इति—वाच्यम् । कादाचित्कविचित्रसहकारिलाभेन कार्याणां कादाचित्क[त्वादि]विरोधासभवात् । ननु क्षित्यादेर्बुद्धिमद्धेतुकत्वे क्रियाऽदर्शनेऽपि जीर्णकूपादिष्विव कृतबुद्धिरुत्पद्येत, न चात्र सोत्पद्यमाना दृष्टा, अतो दृष्टान्तदृष्टस्य हेतोर्धर्मिण्यभावादसिद्धत्वं । तदप्ययुक्तम् । यतः प्रामाणिकस्य तु नासिद्धत्व कार्यत्वस्य बुद्धिमत्कर्तृपूर्वकत्वेन प्रतिपन्नाविनाभावस्य क्षित्यादौ प्रसिद्धेः, पर्वतादौ धूमादिवत् । न च यावन्तः पदार्थाः कृतकास्तावन्तः कृतबुद्धिमात्मन्याविर्भावयन्तीति नियमोऽस्ति । खातप्रतिपूरितायां भुव्यक्रियादर्शिनः

कृतबुद्ध्युत्पादाभावात्। किञ्च, बुद्धिमत्कारणाभावोऽत्रानुपलब्धितो भवता प्रसाध्यते। एतच्चायुक्तं दृश्यानुपलब्धेरेवाभावसाधकत्वोपपत्तेः न चेयमत्रे नै सम्भवति (चेयमत्र सम्भवति)। जगत्कर्तुरदृश्यत्वात्। अनुपलब्धस्य चाभावसाध्यत्वे पिशाचादेरपि तत्प्रसक्तिः स्यादिति।

अत्र प्रतिविधीयते। तत्र यत्तावत् क्षित्यादेर्बुद्धिमद्धेतुकत्वसिद्धये कार्यत्वसाधनमुक्तं तत् किं सावयवत्वम् १ प्रागसतः स्वकारणसत्तासमवायः २ कृतमिति प्रत्ययविषयत्वम् ३ विकारित्वं ४ वा स्यात् ?

यदि सावयवत्वं तदेतदपि किमवयवेषु वर्तमानत्वं १ अवयवैरारभ्यमाणत्वं २ प्रदेशवत्त्वं ३ सावयवमिति बुद्धिविषयत्वं वा ४ ? तत्राद्ये पक्षे अवयवसामान्येनानैकान्तिकोऽयं हेतुस्तद्ध्यवयवेषु वर्तमानमपि निरवयवमकार्यं च प्रोच्यते। द्वितीयपक्षे तु साध्यसमो हेतुर्यथैव हि क्षित्यादेः कार्यत्वं साध्यमेवं पर[मा]ण्वाद्यवयवारभ्यत्वमपि। तृतीयोऽप्याकाशेनानैकान्तिकस्तस्य प्रदेशवत्त्वेऽप्यकार्यत्वात्। प्रसाधयिष्यते चाग्रतोऽस्य प्रदेशवत्त्वम्। चतुर्थकक्षायामपि तेनैवानेकान्तो न चास्य निरवयवत्वं व्यापित्वविरोधात् परमाणुवत् ॥१॥

नापि प्रागसतः स्वकारणसत्तासमवायः कार्यत्वं तस्य नित्यत्वेन तल्लक्षणायोगात्। तल्लक्षणत्वे वा कार्यस्यापि क्षित्यादेस्तद्वन्नित्यत्वानुषङ्गात् कस्य बुद्धिमद्धेतुकत्वं साध्यते। किञ्च, योगिनामशेषकर्मक्षये पक्षत पातिन्यप्रवृत्तत्वेन भागासिद्धोऽयं हेतुस्तत्पक्ष(क्षे) तस्य प्रध्वंसाभावरूपत्वेन सत्तास्वकारणसमवाययोरभावात् ॥२॥

कृतमिति प्रत्ययविषयत्वमपि न कार्यत्वं खननोत्सेचनादिना कृतमाकाशमित्यकार्येऽप्याकाशे वर्तमानत्वेनानैकान्तिकत्वात् ॥३॥

विकारित्वस्यापि कार्यत्वे महेश्वरस्यापि कार्यत्वानुषङ्गः। सतो वस्तुनोऽन्यथाभावो हि विकारित्वम्, तच्चेश्वरस्याप्यस्तीत्यस्यापरबुद्धिमद्धेतुकत्वप्रसङ्गादनवस्था स्यात्। अविकारित्वे चास्य कार्यकारित्वमतिदुर्घटमिति कार्यस्वरूपस्य विचार्यमाणस्यानुपपद्यमानत्वादसिद्धः कार्यत्वादित्ययं हेतुः। किञ्च, कादाचित्कं वस्तु लोके कार्यत्वेन प्रसिद्धं जगतस्तु महेश्वरवत् सदा सत्त्वात् कथं कार्यत्वम्। तदन्तर्गततरुतृणादीना कार्यत्वात् तस्यापि कार्यत्वे महेश्वरान्तर्गतानां बुद्ध्यादीनां परमाण्वाद्यन्तर्गताना पाकजरूपादीना कार्यत्वात् महेश्वरादेरपि कार्यत्वानुषङ्गः। तथा चास्याप्यपरबुद्धिमद्धेतुककल्पनायामनवस्थाऽपसिद्धान्तश्चानुषज्येते।

अस्तु वा यथाकथञ्चिज्जगतः कार्यत्वम् । तथापि कार्यमात्रमत्र हेतुत्वेन विवक्षितम् तद्विशेषोवा ? यद्याद्यस्तर्हि न ततो बुद्धिमत्कर्तृविशेषसिद्धिः । तेन सह तस्य व्याप्त्यसिद्धेः । किन्तु, कर्तृसामान(न्य)स्य [तु सिद्धे ।] तथा च हेतोरकिञ्चित्करत्वं साध्यविरुद्धसाधनाद् विरुद्धत्व वा । ततः कार्यत्वं कृतबुद्ध्युत्पादक बुद्धिमत्कर्तुर्गमक न सर्वं; सारूप्यमात्रेण च गमकत्वे बाष्पादेरप्यग्निं प्रति गमकत्वप्रसङ्गो महेश्वरं प्रत्यात्मत्वादेश्च सादृश्यात् संसारित्वप्रसङ्ग' । किञ्चिज्ज्ञत्वाऽखिलजगदकर्तृत्वानुमापकानुषङ्गस्तुल्याक्षेपसमाधानत्वात् । ततो बाष्पधूमयोः केनचिदंशेन साम्येऽपि यथा कुतश्चिद्विशेषाद् धूमोऽग्निं गमयति न बाष्पादिस्तथा क्षित्यादीतरकार्यत्वयोरपि कश्चिद्विशेषोऽभ्युपगमः(म्यः) । अथ द्वितीयस्तर्हि हेतोरसिद्धत्वं कार्यविशेषस्याभावात्, भावे वा जीर्णकूपप्रासादादिवदक्रियादर्शिनोऽपि कृतबुद्ध्युत्पादकत्वप्रसङ्गः । समारोपान्नेति चेत् सोऽप्युभयत्राविशेषतः किं न स्यात्, उभयत्र कर्तुरतीन्द्रियत्वाऽविशेषात् ।

अथ प्रामाणिकस्यास्तेवा(स्यास्त्येवा)त्र कृतबुद्धिः । ननु कथ तस्य तत्र कृतत्वावगमोऽनेनानुमानेनाऽनुमानान्तरेण वा ? आद्येऽन्योन्याश्रयस्तथा हि सिद्धविशेषणाद्धेतोरस्योत्थानम् , तदुत्थाने च हेतोर्विशेषणसिद्धिरिति । द्वितीयपक्षेऽनुमानान्तरस्यापि सविशेषेण हेतोरेवोत्थानम् । तत्राप्यनुमानान्तरात् तत्सिद्धावनवस्था । तन्न कृतबुद्ध्युत्पादकत्वरूपविशेषणसिद्धिस्तथा च विशेषणासिद्धत्वं हेतोः ।

यदुच्यते खातप्रतिपूरितभूनिदर्शनेन कृतकानात्मनि कृतबुद्ध्युत्पादकत्वनियमाभाव इति तदप्यसत् · तत्राकृत्रिमभूभागादिसारूप्यस्य तदनुत्पादकस्य सद्भावात्, तदनुत्पादकस्योपपत्तेः । न च क्षित्यादावप्यकृत्रिमसंस्थानसारूप्यमस्ति येनाकृत्रिमत्वबुद्धिरुत्पद्यते; तस्यैवानभ्युपगमादभ्युपगमे वाऽपसिद्धान्तप्रसक्तिः स्यादिति कृतबुद्ध्युत्पादकत्वरूपविशेषणासिद्धत्व हेतो' । सिद्ध्यतु वा तथाप्यसौ विरुद्धो घटादाविव शरीरादिविशिष्टस्यैव बुद्धिमत्कर्तुरत्र प्रसाधनात् ।

नन्वेवं दृष्टान्तदार्ष्टान्तिकसाम्यान्वेषणे सर्वत्र हेतूनामनुपपत्तिरिति चेन्न । धूमाद्यनुमाने महानसेतरसाधारणस्याग्ने प्रतिपत्तेः । अत्राप्येवं बुद्धिमत्सामान्यप्रसिद्धेर्न विरुद्धत्वमित्ययुक्तम्, दृश्यविशेषाधारस्यैव तत्सामान्यस्य कार्यत्वहेतो' प्रसिद्धेर्नादृश्यविशेषाधारस्य, तस्य स्वप्नेऽप्यप्रतीतेः खरविषाणाधारतत्सामान्यवत् । ततो यादृशात् कारणाद् यादृशं कार्यमुपलब्धं तादृशादेव तादृशमनुमातव्यम् । यथा यावद्धर्मात्मकाद् वह्नेर्यावद्धर्मात्मकस्य धूमस्योत्पत्ति' सुदृढप्रमाणात् प्रतिपन्ना तादृशादेव धूमात् तादृशस्यैवाग्नेरनुमानमित्यैतेन साध्य-साधनयोर्विशेषेण व्याप्तौ गृह्यमाणायां सर्वानुमानोच्छेदप्रसक्तिरित्या-

ध्यपास्तं द्रष्टव्यमिति । तथाऽकृष्टप्रभवैस्तरुतृणादिभिर्व्यभिचार्यय हेतुः । द्विविधानि कार्याणि उपलभ्यन्ते । कानिचिद् बुद्धिमत्पूर्वकाणि यथा घटादीनि । कानिचित्तु तद्विपरीतानि यथाऽकृष्टप्रभवतृणादीनि । तेषां पक्षीकरणादव्यभिचारे स श्यामस्तत्पुत्रत्वादितरपुत्रवदित्यादेरपि गमकत्वप्रसङ्गान्न कश्चिद्धेतुर्व्यभिचारी स्याद् व्यभिचारविषयस्य सर्वत्रापि पक्षीकर्तुं शक्यत्वात् । ईश्वरबुद्ध्यादिभिश्च व्यभिचारस्तेषां कार्यत्वे सत्यपि समवायिकारणादीश्वराद् विभिन्नबुद्धिमत्पूर्वकत्वाभावात् । तदभ्युपगमे चानवस्था । तथा कालात्ययापदिष्टश्चायमकृष्टप्रभवाङ्कुरादौ कर्त्रभावस्याध्यक्षेणाध्यवसायात् । अग्नेरनुष्णत्वे साध्ये द्रव्यत्ववत् ।

ननु तत्राप्यदृश्य ईश्वरवत् कर्तेति चेत्तन्न । यतस्तत्र तत्सद्भावोऽस्मादेवाऽन्यतो वा प्रमाणात् सिद्ध्येत् । प्रथमपक्षे चक्रकम्, अन्यतो हि तत्सद्भावे सिद्धेऽस्यादृश्यत्वेनालम्भसिद्धिस्तत्सिद्धौ च कालात्ययापदिष्टत्वाभावस्ततश्चास्मत्तत्सद्भावसिद्धिरिति । द्वितीयपक्षोऽप्ययुक्तस्तद्भावावेदकस्य प्रमाणान्तरस्यैवाभावात् ।

अस्तु वा तत्र तत्सद्भावस्तथाप्यस्यादृष्टत्वे शरीराभावः कारणं विद्यादिप्रभावो जातिविशेषो वा । प्रथमपक्षे कर्तृत्वानुपपत्तिरशरीरत्वान्मुक्तात्मवत् । ननु शरीराभावेऽपि ज्ञानेच्छाप्रयत्नाश्रयत्वेन स्वशरीरकरणे कर्तृत्वमुपपद्यत इत्यप्यसमीक्षिताभिधानम् । शरीरसम्बन्धेनैव तत्प्रेरणोपपत्तेः । शरीराभावे मुक्तात्मवत् तदसंभवात् । शरीराभावे च ज्ञानाद्याश्रयत्वमप्यसंभाव्यम् । तदुत्पत्तावस्य निमित्तकारणत्वात् । अन्यथा मुक्तात्मनोऽपि तदुपपत्तिप्रसक्तेः । विद्यादिप्रभावस्य चादृश्यत्वहेतुत्वे कदाचिदसौ दृश्येत । न खलु विद्याभृतां शाश्वतिकमदृश्यत्वं ददृशे । पिशाचादिवज्जातिविशेषोऽपि नादृश्यत्वे हेतुः, एकस्य जातिविशेषाभावात्, अनेकव्यक्तिनिष्ठत्वात् तस्याः ।

अस्तु वा दृश्योऽदृश्यो वाऽसौ, तथापि किं सत्तामात्रेण १ ज्ञानवत्त्वेन २ ज्ञानेच्छाप्रयत्नवत्त्वेन ३ तत्पूर्वकव्यापारेण ४ ऐश्वर्येण ५ वा क्षित्यादेः कारणं स्यात्? तत्राद्यपक्षे कुलालादीनामपि जगत्कर्तृत्वमनुषज्यते सत्त्वाविशेषात् । द्वितीये तु योगिनामपि कर्तृत्वापत्तिः । तृतीयोऽप्यसाम्प्रतोऽशरीरस्य पूर्वमेव ज्ञानाद्याश्रयत्वप्रतिषेधात् । चतुर्थोऽप्यसंभाव्योऽशरीरस्य कायवाक्कृतव्यापारत्वासम्भवात् । ऐश्वर्यमपि ज्ञातृत्वं कर्तृत्वमन्यद्वा? ज्ञातृत्वं चेत् तत् किं ज्ञातृत्वमात्रं सर्वज्ञत्वं वा? आद्यपक्षे ज्ञातैवासौ स्यान्नेश्वरोऽस्मदाद्यन्यज्ञातृवत् । द्वितीयेऽप्यस्य सर्वज्ञत्वमेव स्यान्नैश्वर्यं सुगतादिवत् । अथ कर्तृत्वं तर्हि कुम्भकारादीनामप्यनेककार्यकारिणामैश्वर्यप्रसक्तिः । नाप्यन्यत्, इच्छाप्रयत्नव्यतिरेकेणान्यस्यैश्वर्यनिबन्धनस्येश्वरेऽभावात् । किञ्चे-

श्वरस्य जगन्निर्वा(र्मा)णे यथारुचिप्रवृत्तिः १ कर्मपारतन्त्र्येण २ करुणया ३ क्रीडया ४ निग्रहानिग्रहविधानार्थं ५ स्वभावतो ६ वा। अत्राऽऽद्यविकल्पे कदाचिदनादृश्येव सृष्टिः स्यात्। द्वितीये स्वातन्त्र्यहानिस्तृतीये सर्वमपि जगत् सुखितमेव करोति। अथेश्वरः किं करोति पूर्वार्जितैरेव कर्मभिर्वशीकृता दुःखमनुभवन्ति। तदा तस्य कः पुरुषकारः? अदृष्टापेक्षस्य च कर्तृत्वे किं तत्कल्पनया जगतस्तदधीनतैवास्तु। चतुर्थपञ्चमयोस्तु वीतरागद्वेषताऽभावः प्रसज्यते। तथाहि—रागवाने(नी)श्वरः क्रीडाकारित्वात् बालवत् तथाऽनुग्रहप्रदत्वाद् रागवत् तथा द्वेषवानसौ निग्रहप्रदत्वात् तद्वदेवेति। अथ स्वभावतस्तर्हि अचेतनस्यापि जगत एव स्वभावतः प्रवृत्तिरस्तु किं तत्कर्तृकल्पनयेति।

न कार्यत्वहेतुर्बुद्धिमन्तं कर्तारमीश्वरं साधयति। एवं सन्निवेशविशिष्टत्वादचेतनोपादन(दान?)त्वादभूतभावित्वादादयोऽपि स्वयमुत्थाप्या स्तुल्याक्षेपसमाधानत्वात्। किञ्च, क्षित्यादेर्बुद्धिमत्पूर्वकत्वे साध्ये प्रदीयमानाः सर्वेऽपि हि हेतवो विरुद्धा दृष्टान्तानुग्रहेण सशरीरासर्वज्ञासर्वकर्तृपूर्वकत्वसाधनात्। न च धूमात् पावकानुमानेऽप्ययं दोषः। तत्र तार्णपार्णादिविशेषाधारवह्निमात्रव्याप्तस्य धूमस्य दर्शनात्। नैवमत्र सर्वज्ञासर्वज्ञकर्तृविशेषाधिकरणतत्सामान(न्य)कार्यत्वस्यास्ति व्याप्तिः। सर्वज्ञस्य कर्तुरतोऽनुमानात् प्रागसिद्धेर्व्यभिचारिणश्चामी, बुद्धिमन्तमन्तरेणापि विद्युदादीनां प्रादुर्भावविभावनात्। स्वभावव्यवस्थायामबुद्धिमत्पूर्वस्यापि कार्यस्य दर्शनाच्चेति। काया(ला)त्ययापदिष्टाश्चैते, प्रत्यक्षागमबाधितपक्षानन्तरं प्रयुक्तत्वात्। तद्बाधा च पूर्वमेव दर्शिता। प्रकरणसमाश्चामी प्रकरणचिन्ताप्रवर्त्तकानां हेत्वन्तराणां सद्भावात्। तथाहि—ईश्वरो जगत्कर्ता न भवति निरुपकरणत्वाद् दण्ड-चक्र-चीवराद्युपकरणरहितकुलालवत्। तथा व्यापित्वादाकाशवत्। एकत्वात् तद्वद् इत्यादय इति।

नित्यत्वादीनि तु विशेषणानि तद्व्यवस्थापनायानीयमानानि षण्ढं प्रति कामिन्या रूपसम्पन्निरूपणप्रायाण्यपकर्णनीयान्येव। विचारासहत्वख्यापनार्थं तु किञ्चिदुच्यते। तत्रादौ नित्यत्वं विचार्यते। तच्चेश्वरे न घटते। तथाहि—नेश्वरो नित्यः स्वभावभेदेनैव क्षित्यादिकार्यकर्तृत्वात्। अप्रच्युतानुत्पन्नस्थिरैकस्वभावं कूटस्थं नित्यमिति हि नित्यत्वलक्षणाभ्युपगमात्। स्वभावभेदानभ्युव(भेदानभ्युपगमे) सृष्टिसहारादिविरुद्धकार्यकारित्वमतिदुर्घटम्। नापि तज्ज्ञानादीनां नित्यत्वं वाच्यं प्रतीतिविरोधात्। ईश्वरज्ञानादयो न नित्या ज्ञानादित्वादस्मदादिज्ञानादिवदित्यनुमानविरोधाच्चेति। एतेन

तदीयज्ञानादयो नित्या इत्यादि यदवादि तदपोहितमूहनीयम् । सर्वज्ञत्वमप्यस्य केन प्रमाणेन ग्राह्यम् । न तावत् प्रत्यक्षेण तस्येन्द्रियार्थसन्निकर्षोत्पन्नत्वेनातीन्द्रियार्थ-ग्रहणासमर्थत्वात् । नाप्यनुमानेनाव्यभिचारिलिङ्गाभावात् । ननु जगद्वैचित्र्याऽन्य-थाऽनुपपत्तिरूपं तदस्त्येवेति चेन्न तेन सहाविनाभावाभावात् । जगद्वैचित्र्यस्य सार्वज्ञ विनापि शुभाशुभकर्मपरिपाकादिवशेनोपपद्यमानत्वात् । किञ्चायं यदि सर्व-ज्ञस्तदा जगदुपप्लवकरणस्वैरिण पश्चादपि कर्तव्यनिग्रहानसुरादींस्तदधिक्षेपकृतोऽस्म-दादींश्च किमर्थ सृजतीति नाय सर्वज्ञः । तथा बहूनामेककार्यकरणे वैमत्यसम्भावनया महेशितुरेकत्वकल्पना भोजनादिव्ययभयात् कृपणस्यात्यन्तवल्लभपुत्र-कलत्र-मित्रादिप-रित्यजने शून्यारण्यानीसेवनतुलामाकलयति । अनेककीटिकासरघाशतसम्पाद्यत्वेऽपि शक्रमूर्द्धमधुच्छत्रादिकार्याणामेकरूपतयाऽविगानेनोपलम्भात् । किञ्चेश्वरस्याखिलजग-त्कर्तृत्वेऽभ्युपगम्यमाने शास्त्राणा(णां) प्रमाणेतरव्यवस्थाविलोपः स्यात् । तथाहि सर्वं प्रमाणं शास्त्रमीश्वरप्रणीतत्वादितरतत्प्रणीतशास्त्रवत् । प्रतिवाद्यादिव्यवस्थाविलोपश्च सर्वेषामीश्वरादेशविधायित्वेन तत्प्रतिलोमाचरणानुपपत्तेः प्रतिवाद्यभावप्रसङ्गादिति न सृष्टिकरस्य महेश्वरस्य कथञ्चिदपि सिद्धिः ।

॥ ईश्वरोत्थापकस्थलं समाप्तम् ॥[1]

*

1. लिपिकारस्य पुष्पिका—'पण्डितश्रीरामसुन्दरगणिशिष्यरूपसुन्दरेण लिखितः' ।

श्रीभुवनसुन्दरसूरिरचितम्

# ॥ परब्रह्मोत्थापनस्थलम् ॥

श्रीवीरजिनमानम्य सर्वातिशयशालिनम् ।
वैतण्डिकनिरासेन स्थाप्यते जैनशासनम् ॥

इह हि युक्तिकलापोल्लोलकल्लोलमालाव्याप्तसकलदिक्चक्रवालस्याद्वादं समुद्रमिवावगाहयितुमथ सामर्थ्यं बिभ्राणाः, नित्यानित्यत्वसदसत्त्वादिस्ववचनरचनाप्रसृत्वरकरप्रकरैर्भासितभूमण्डलान्तं च कौशिका इव सहस्रकरं दृग्गोचरीकर्तुमथ प्रभुतां दधाणाः, गतसर्वप्रतिभाविलासाः कृकलासा इव तं चोपहसन्तः, प्रचण्डस्वतुण्डताण्डवाडम्बरबलेनैव सर्वत्र विकसन्तः प्रमाणप्रमेयव्यवस्थाबाहीकाः, प्रत्यक्षादिप्रमाणप्रतिष्ठितप्रपञ्चादिवस्तुनोऽपि निर्लोठनेन गतसकलह्रीकाः, स्वीकृतस्याद्वादवादवादिवृन्दारकवदनोद्भूतप्रभूतयुक्तिव्यक्तिमहानदीपूरप्लाव्यमानाः कुशकाशावलम्बनानीव नानामतानि प्रापनीपद्यन्तः अन्यतीर्थीयाः ।

तत्र वेदान्तमतानुसारिण एवं प्रमाणयन्ति—प्रपञ्चो मिथ्या दृश्यत्वात् शुक्तिशकलकलधौतवत् रज्जुभुजङ्गवत् स्वप्नोपलब्धराज्यादिवच्च ।

अत्र परतुण्डकण्डुव्यपोहाय व्यापार्यन्ते काश्चिदुत्तरव्यतिकरौषधप्रक्रियाः । असिद्धविरुद्धानैकान्तिकदोषाः प्रत्यक्षा हर्यक्षा इव त्रयस्त्रासयन्त्यमुं हेतुहरिणपोतम् । तथाहि—दृश्यत्वम् अत्र कस्यापेक्षया विवक्षितं शुभवद्भिर्भवद्भिः ? किं परमाण्वादिसूक्ष्माकारापेक्षया स्तम्भादिस्थूलाकारापेक्षया वा ? आद्यविकल्पोऽसम्भवबाधितत्वेनावकेशितरुरिव न भवता मनोरथफलावलीप्राप्त्यै, परमाणूनां तद्गतरूपरसगन्धस्पर्शादीनां च भवतामदृश्यत्वात् । द्वितीयविकल्पोऽप्यसत्कल्प एव स्थूलाकाराणामपि मन्दरपुरन्दरस्वर्गभर्गभार्गवादीनां भवतामदृश्यत्वात् ।

अथ मा भवन्त्वस्माकं सर्वेऽपि दृश्याः किन्तु कस्यापि पुरुषविशेषस्य भविष्यन्ति तर्हि सोऽपीन्द्रियज्ञानग्राही अतीन्द्रियज्ञानग्राही वा ? आद्यविकल्पे प्रागुक्तमेव दूषणं लालगीति । द्वितीयविकल्पेऽतीन्द्रियज्ञानग्राह्यपि सर्वज्ञो वा स्यादसर्वज्ञो वा ? द्वितीयविकल्पे प्राच्य एव दोषः । आद्यविकल्पोऽपि न जाघटीति सर्वज्ञस्य भवद्भिरनङ्गीकारात् ।

अथ न हि परमाण्वाद्यस्माभिरङ्गीक्रियते प्रपञ्चमिथ्यात्वस्यैव प्रतिज्ञानात् तर्हि आश्रयासिद्धतामातङ्गीस्पर्शपातक हेतुश्रोत्रियस्य, प्रपञ्चस्याऽऽश्रयस्य युष्मन्मतेनासत्त्वात् ।

अथ प्रपञ्चो असन्नप्यनाद्यविद्याबलेन दृश्यते इति चेत् तर्हि सा सती असती

अवाच्या वा ? यदि सती तर्हि "एकमेवाद्वितीयं ब्रह्म" [छां०उ०६.२.१] इत्यसम्बद्धम्, अविद्याया द्वितीयायाः सद्भावात्। असती चेत् तर्हि न तद्बलात् प्रपञ्चप्रतीतिः द्वयोरप्यसत्त्वात्। अवाच्या चेत् तर्हि सर्वथा एकदेशेन वा ? आद्यविकल्पेऽविद्येति नाम्नाऽप्यावाच्यत्वं स्यात्। अस्ति च युष्मन्मतेनाविद्याशब्देन सा वाच्या। ततः प्रकट एवात्र विरोधः। द्वितीयविकल्पे सर्वेऽप्यवाच्याः स्यु. पदार्थाः, कैश्चित् प्रकारैः सर्वेषामवाच्यत्वात्। सदसद्विलक्षणत्वमवाच्यत्वमित्याशयः। तदपि क्लीबस्य कामिनीकामनायामपत्योत्पत्त्यभिलाषप्रायम्, सदसद्विलक्षणस्य वस्तुन एवासत्त्वात्। अथ सर्वव्यवहारापेक्षयाऽस्ति तर्हि व्यवहारोऽपि सन्नसन् वेति तदेव दूषणम्।

किञ्च, प्रपञ्चो दृश्यः प्रत्यक्षेण। तच्चासद्रूपं सद्रूपं वा ? आद्यविकल्पे न हि तेन वन्ध्यास्तनन्धयेनेव किञ्चित् साधयितुं पार्यते। द्वितीयविकल्पे प्रत्यक्षस्य सद्रूपत्वेऽद्वितीयवादहानिः। तथा प्रत्यक्षं विधायकं निषेधकं वा ? नाद्यविकल्पः प्रपञ्चनिषेधसिद्धौ निबन्धनम्, प्रत्यक्षस्य विधायकत्वादेव। तथा चोक्तम्—"आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः" [ब्र० सि० २.१] इति वचनात्। द्वितीयविकल्पस्तु स्वानङ्गीकारादेव बाधितः।

अथानुमानगम्यः प्रपञ्चस्तर्हि दृश्यत्वादिति स्थाने अनुमेयत्वादिति वाच्यम्। एवं कल्पनेऽप्यजागलस्तनदोहनेनेव न भवदिष्टस्य दुग्धस्येव प्राप्तिः। तदप्यनुमानं सदसद्वेति दूषणपरम्परोद्घोषणा कार्या। अथासत्यादपि अनुमानात् परब्रह्मसिद्धिर्यथा असत्यादपि जलचन्द्रान्नभचन्द्रस्य। एतदपि न चतुरचेतश्चमत्कारकारकम्, असत्येन खरविषाणेनेव कस्यापि साधयितुमशक्यत्वात्।

अथ मिथ्यात्वं परमार्थसत्यत्ववैधुर्यं सिसाधयिषितम्। एव तर्हि सद्रूपता सिद्धा प्रपञ्चस्य। परमार्थसत्यत्वे विवाद। सोऽप्यपाकरिष्यते। तथाहि—किमिदं परमार्थसत्यत्वं नाम परब्रह्मरूपसत्त्वं प्रमाणप्रतिष्ठितार्थविषयत्वं वा ? आद्यविकल्पे सुतरां घट-पट-शकट-मुकुटादिपदार्थसार्थपुरुषोत्तमस्य परमार्थसत्यत्वलक्ष्मीसम्भोगभाजनत्वम्, भवद्भिरेव परमब्रह्मविवर्तत्वेन स्वीकारात् "सर्वं वै खल्विदं ब्रह्म" [छा.उ.३.१४.१] "नेह नानास्ति किञ्चन" [बृ०उ०४.४.१९] इत्यागमप्रामाण्यात्। द्वितीये ब्रह्मणः प्रमाणप्रतिष्ठितार्थविषयत्वे प्रपञ्चस्यापि प्रमाणप्रतिष्ठितार्थरूपत्वम्, ब्रह्मरूपत्वात् तस्य। तथा च घटपटादयः पदार्थाः सत्याः, प्रतिभासमानत्वात् परब्रह्मवत् इत्यनेनापि तत्सिद्धिः।

अथ स्वव्यवहारातिरेकि स्वदर्शनापेक्षया नियतविधिमात्रं दृश्यत्वमाकाङ्क्षितं तर्हि एतदेव विचार्यते। स्वशब्दस्य प्रपञ्चापेक्षत्वे प्रपञ्च सत्योऽसत्यो वा ? आद्यविकल्पे

१ तत् प्रत्यक्षम्।

अस्मन्मतप्रवेश । असत्यश्चेत् तेन व्यवहारः कथम् ? किञ्च, महाविद्यानुमानस्येव बह्वक्षरस्वल्पार्थस्यास्य मतस्य तात्पर्यार्थस्त्वयमेव यत् स्वप्रकाशे परापेक्षितत्वं तच्च विचार्यमाणं युष्मच्चित्तवृत्तिमहिलायाः षण्ढालिङ्गनमिव न चिन्तिताभिलाषपूर्त्यै । यत् यत् स्वप्रकाशे परापेक्षं तत् तत् मिथ्येति प्रतिवादिनो व्याप्त्यसिद्धेरसिद्ध एवायं हेत्वाभासः । चित्रभानु-सुधाभानु-प्रदीपादीनां प्रपञ्चान्तर्गतत्वेऽपि स्वप्रकाशे परापेक्षितत्वाभावेन भागासिद्धोऽयम् । तथा ब्रह्मणोऽपि स्वरूपनिरूपणं वेदागमवाक्यैरेव कर्तुं शक्यते अतस्तस्यापि प्रकाशे परापेक्षितत्वेन मिथ्यात्वं बभूव । किञ्च, स्वातिरेक इत्यत्र स्वस्मादतिरेकस्तदैव स्यात् यदा द्वयं सिद्धं भवति, यथा भीमार्जुनयोर्मध्ये भीमोऽधिकः ।

अथ "सत्यानृते मिथुनीकृत्य व्यवहार प्रवर्तते"[1] । एवमपि सत्यानृतयोर्मिथुनीकरणं कथमिति वाच्यम् । नहि खरविषाणस्यासत्यस्य सत्येन घटपटादिना संयोगः सम्भवी । सम्भवे वा वन्ध्यास्तनंधयपरब्रह्मणी अपि संयोजयितव्ये ।

अथ लोकव्यवहारापेक्षया प्रपञ्चः सत्योऽप्यङ्गीक्रियते । तत्र प्रातीतिकव्यावहारिकपारमार्थिकभेदात् त्रेधा सत्यम् । तथाहि—प्रथमज्ञाने रजतस्य सत्यस्य प्रतिभासात् तत्र प्रवृत्तिहेतुकत्वेन शुक्तिशकले रजतप्रतीतिः प्रातीतिकं सत्यं प्रथमम् । घटपटादयः प्रतिक्षणवीक्ष्यमाणा व्यवह्रियन्ते इत्येतत् द्वितीयं सत्यं व्यावहारिकम् । व्यावहारिकत्वं चैषां घटपटादीनां बाधप्रतिभासाभ्यां अनिर्वचनीयरूपत्वात् । बाधश्च ज्ञानान्तरेण शुक्तिकायां तत्कालमेव, रजताभावेन शुक्तिकाप्राप्तेः । घटपटादिपदार्थसार्थे तु परब्रह्मस्वरूपपरिज्ञानेनोत्तरकालं बाधः । प्रतिभासश्चोभयत्रापि विद्यत एव । पारमार्थिकसत्यं तु परब्रह्मैव तस्यैव तात्त्विकस्य सद्भावात् । तात्त्विकत्व च बाधप्रतिभासाभावात् ।

एतदपि हि सत्यतालक्षणं विचार्यमाणं विशरारुतां अञ्चति । तथाहि—प्रतीतिश्चेदसत्या तर्हि तद्बलात् सत्य कथम् ? सत्यं चेत् प्रतीतिरसत्या कथम् ? एव व्यावहारिकसत्येऽपि व्यवहारः सत्योऽसत्यो वेति तदेव दूषणम् । किञ्च, घटपटादयो ब्रह्मणो भिन्ना अभिन्ना वा ? भिन्नत्वे द्वयसिद्धिः । अभिन्नत्वे तेषामसत्यत्वे तदप्यसत्यं जातम् । किञ्च, परब्रह्म एकमनेकं वा ? एकं चेत् तर्हि कथं नवनवाकारैः प्रतीयते ? अनेकता त्वभिगमेनैव बाधिता । अथाविद्यावशात् तदनेकधा प्रतिभासते । एवं तर्हि अविद्यासिद्धौ नानात्वसिद्धिः नानात्वसिद्धौ च अविद्यासिद्धिरिति स्फुटमितरेतराश्रयत्वम् ।

किञ्चाविद्या किंस्वरूपा ? सदसद्विलक्षणत्वेनावाच्येति चेत् तर्हि परमार्थसत्या,

---

1 तुलना–सत्यानृते मिथुनीकृत्य नैसर्गिकोऽय लोकव्यवहार । ब्र०सू० शा०भा० १ १.१

सदसद्विलक्षणत्वात् परब्रह्मवत् । अथ परब्रह्माऽवाच्यं न भवति तर्हि वाच्यं लक्ष्यं व्यङ्ग्यं तात्पर्यगम्यं वा ? यदि वाच्यं तर्हि तद्वत् प्रपञ्चोऽपि वाच्य एवास्तु । अथ लक्ष्यं तर्हि ब्रह्मेत्युक्ते कथं मुख्यार्थबाधः ? किञ्च, मुख्यार्थासंबद्धं न लक्ष्यं नाम षड्भेदायां लक्षणायाम्, अतो न लक्षणा । किञ्च, यल्लक्ष्यं भवति तद्वाच्यमपि स्यात् यथा 'गंगायां घोषः' इत्युक्ते तटं लक्ष्यं, तटमित्युक्ते वाच्यं च । तस्मात् सर्वार्थानां वाच्यत्वे सिद्धे लक्ष्यं ब्रह्मेति वचनं न किञ्चिद् विशेषं पुष्णाति । अथ व्यङ्ग्यं तर्हि मुख्यगौणलक्ष्याद्यर्थव्यतिरिक्तः प्रतीतिविषयो व्यङ्ग्योऽर्थः, अयं च वस्त्वलङ्काररसादि-भेदात् त्रेधा, सोऽपि विधिप्रतिषेधादिरूपो अनेकधा, एतेषु को नामायं व्यङ्ग्योऽर्थः ? व्यङ्ग्यत्वेऽपि वाच्यत्वं लक्ष्यत्वं च स्वीकर्तव्यमेव । तस्मात् व्यङ्ग्य ब्रह्मेत्युक्तेऽपि न कश्चिद् विशेषो दृश्यते । अथ शृङ्गारादिरसा यथा व्यङ्ग्या एव भवन्ति न वाच्या एवं ब्रह्मापि तर्हि अभिव्यक्तस्वभावं तद् विद्यते अनभिव्यक्तस्वभावं वा ? आद्यविकल्पोऽसत्कल्प' पुराऽप्यभिव्यक्तस्वभावत्वात्[1] । अथ तात्पर्यगम्यं ब्रह्म तथाहि वैदिकवाक्यैरज्ञाननिवृत्तिस्तस्यां च जातायां ब्रह्मैवाविशिष्यत इति तस्य तात्पर्यगम्यत्वम् । एतदप्यविचारितरमणीयं यतो ब्रह्मणस्तात्पर्यगम्यत्वं तदा कल्पते यदा वाच्यत्वं सिद्धं न स्यात् । "निर्मलनिश्चलनिष्क्रियरूपं व्योम यथैव घटे बहिरन्तः तद्वदिदं परमार्थसत्त्वं भूतगणेषु भवेद् बहिरन्तः" तथा "पुरुष एवेदं सर्वं यद् भूतं यच्च भाव्यम्" [श्वेता० उप० ३.१५] इत्यादि तथा "सर्वं वै खल्विदं ब्रह्म" [छां० उ ३. १५. १] इत्यादि तथा "तत्त्वज्ञानोत्पाद्यमिथ्याकारणप्रध्वंसतत्कार्यसामानाधिकरण्यं मोक्ष" [ ], "सत्यं ज्ञानमनन्तं ब्रह्म" [तैत्ति० उ० २. ३] इत्यादिवाक्यैर्वाच्यत्वस्यापि स्वीकारात् । किञ्च, यथा भवद्भिरेवमुच्यते प्रपञ्चस्य विचार्यमाणस्याघटमानत्वात् ब्रह्मैवाविशिष्यते तथा कैश्चित् एवमपि वक्ष्यते प्रपञ्चस्य ब्रह्मणोऽपि चाघटमानत्वात् शून्यवाद एव तात्पर्यभूतः । अथ ब्रह्म घटमानं प्रपञ्चोऽपि घटमान एवेति त्यज्यतां मत्सरः । किञ्च, वेदवाक्यैर्दानाध्ययनयज्ञादीनां स्वरूपं प्रतिपाद्यते तथा ब्रह्मणोऽपि । न चैतेषां विशेषो दृश्यते । एवं सत्यपि यदि ब्रह्म तात्पर्यगम्य तर्हि तेऽपि तात्पर्यगम्या भवन्तु समानत्वात् । भवतु वा ब्रह्म तात्पर्यगम्यं किन्तु यथा ब्रह्म तात्पर्यगम्यं प्रपञ्चोऽपि तथैवास्तु । किञ्च, ब्रह्मणो लक्ष्यत्वे प्रपञ्चस्य मुख्यार्थवाच्यत्वं बलादायातम् । अथ मायावशात् प्रपञ्चस्य मुख्यार्थवाच्यत्वं तर्हि लक्ष्यत्वमपि ब्रह्मणस्तद्वशादेव भवतु ।

अथ प्रपञ्चोऽनिर्वाच्य एव यथा शुक्तिशकले कलधौतम् । तथाहि—शुक्तिशकले कलधौतं तावत् सन्न भवति रजतसाध्यार्थक्रियाया अकरणात् । असदपि

१. अत्र पाठ पतित प्रतिभाति ।

न भवति तत्र प्रतीयमानत्वात् । न च सर्वथाऽसत् प्रतीयते खरविषाणवत् । तस्मात् शुक्तिशकले कलधौतवत् सदसद्विलक्षणत्वेनानिर्वाच्य एवायं प्रपञ्चः ।

एतदपि न प्रामाणिकपर्षदर्हम् । तथाहि—शुक्तिशकलकलधौतस्य सदसद्विलक्षणत्वे किं प्रमाणं प्रत्यक्षमनुमानं वा ? नाद्यः पक्षः सदसद्विलक्षणग्राहकत्वाभवात् । अथानुमानमस्ति तन्निश्चायकम् । तथाहि—अनिर्वाच्यं शुक्तिशकलकलधौतम् अपरोक्षप्रतिभासबाधान्यथानुपपत्ते' । एतदप्यनुमानं अयुक्तं हेतोर्विरुद्धत्वात् । प्रत्यक्षप्रतिभासबाधा च यत्र स्यातां तत्र प्रथमं कलधौतादिशब्दैः पश्चाच्च शुक्तिकादिशब्दैः सर्वैरपि वाच्यत्वस्यैव स्वीकारात् । तथाऽत्र व्याप्तिरुभयसिद्धा नास्ति । न ह्यपरोक्षतया प्रतिभासो बाधा च यस्य स्यातां तदनिर्वाच्यत्वेनाऽस्माभिः स्वीक्रियते । तत्रासत्त्वस्यैव स्वीकारात् । ततो दृष्टान्तविकलत्वेनाव्याप्तमेवेदं साधनम् ।

किञ्च, मतिवैगुण्याद् विपर्यय एव शुक्तौ रजतज्ञानस्याङ्गीकार्यः । एकत्र चेन्मतिमान्द्याद् विपर्ययो जातः तर्हि सर्वत्र विपर्ययेणैव किं भवितव्यम् ? ऐकेन चेत् तिमिरादिदोषेण द्वौ चन्द्रौ दृष्टौ तर्हि सर्वैरपि किं तथैव द्रष्टव्यौ ? तथाभ्युपगमे दृष्टहानिरदृष्टकल्पना च । तथा सर्वेऽप्येवं वदन्ति यथाऽस्य शुक्तिशकलकलधौतभ्रान्तिर्जाता । न हि पुनः कोऽप्येवं वावदीति घट-पट-लकुट-शकट—मुकुटादौ सर्वत्र सर्वेषां भ्रान्तिरेव । न हि यथा मरुमरीचिकायां जलप्रतीतिर्भ्रान्ता तथा तटाकतटिन्यादावपि भ्रान्तैव, कैश्चिदपि तथाऽकथनात् । अथ सर्वेषां वचनमप्रमाणं तर्हि भवतोऽपि वचनं कथं प्रमाणम् ? सर्वान्तर्गतत्वाद् भवतः । बहूनां वचनाप्रामाण्ये चैकस्य वचनं प्रमाणीक्रियते तर्हि द्विचन्द्रज्ञानमपि सत्यं स्यात् । किञ्च, प्रतीतिः सैव सत्या याऽर्थक्रियाकारिणी, अन्या तु भ्रान्तैव । यदि च मरुमरीचिका-जल-तटाकजलप्रतीती द्वे अपि भ्रान्तत्वेन समाने स्यातां तदा मरुमरीचिकायामिव तटाकादावपि न क्रियेत प्रवृत्तिर्ज्ञाततत्त्वैर्भवद्भिः, क्रियते च । तस्मादपि विशेषः । विशेषे च सिद्धे एका प्रतीतिः सत्या, एका भ्रान्ता चेति बलात् प्रतिपत्तव्यम् । तत्प्रतिपत्तौ च न हि भ्रान्तप्रतिपत्तिबलेनाभ्रान्ताऽपि प्रतिपत्तिर्भ्रान्ता कर्तुं शक्या । समुत्थलद्दवबलधूलिपटल, शीतकाले जलादौ बाष्पादिमण्डल वा दृष्ट्वा एकत्राग्न्यनुमानभ्रान्तौ किं सर्वत्र भ्रान्त्यैव भाव्यम् ? तथाङ्गीक्रियमाणेऽनुमानव्यवहारोऽपि न युक्तः । तथा च सति प्रपञ्चो मिथ्येत्याद्यनुमानं न युक्तम् । एवं चैकस्य दोषदुष्टतायां त्रिभुवनमपि दोषदुष्टं स्यात् । ततो नाऽनेन दृष्टान्तेन सदसद्विलक्षणत्वं साधयितुं शक्यते प्रपञ्चस्यास्मान् प्रति दृष्टान्तस्यासिद्धत्वात् ।

अथ शुक्तिशकले कलधौतमसत् तर्हि प्रतिभासते कथमिति चेत चाकचिक्यादिसाधारणधर्मसद्भावादिति ब्रूमः। ननु तर्हि खरविषाणस्यापि कथं न प्रतिभासः ? साधारणधर्माभावादित्यवेहि। यतो यत् सर्वथा नास्त्येव तस्य धर्मा अपि कथं कल्पयितुं शक्याः। अथ कलधौतमपि तत्र नास्ति। माऽभूत् तत्रान्यत्र सद्भावेन पुरा दृष्टत्वेन च तद्धर्मणा प्रतिभासो युक्त एव। अथ या या प्रतीतिः सा सा भ्रान्तैव तर्हि ब्रह्मणोऽपि प्रतीतिर्भ्रान्ता स्यात् प्रतीयमानत्वात्। एवं च लाभमिच्छतो मूलहानि। अथ ब्रह्माऽप्रतीयमानं तर्हि सर्वथा किञ्चिद्वा ? आद्यश्चेद् विकल्पस्तर्हि ब्रह्मविषयवचनानामप्रवृत्तेर्मौनमेव वः श्रेयः तदुक्तौ। अथ द्वितीयः पक्षस्तर्हि कथञ्चित् प्रपञ्चो न प्रतीयते परमाण्वादीनामप्रतीयमानत्वात्। तस्मात् सदसद्विलक्षणत्वं प्रपञ्चस्य कथमपि न जाघटीति। तदघटने च दूरापास्तमेवानिर्वचनीयत्वम्।

भवतु वाऽनिर्वचनीयत्वं स्वीकार्यं, युक्तीनामुभयत्र समानतया [या.] काश्चित् प्रपञ्चयुक्तयः प्रपञ्चयिष्यन्ते ताः सर्वा अपि ब्रह्मणि लाल्गत्यः कथं निवारणीयाः ? किञ्च, सर्वथाऽनिर्वाच्यत्वे प्रपञ्चस्य सदसद्विलक्षणत्वशब्देनापि वाच्यत्वं न युक्तम्। तथा प्रपञ्चशब्देन घटपटादिशब्दैरपि च वाच्यता न युक्ता। किञ्च, प्रपञ्चस्याऽनिर्वाच्यत्वे मिथ्यात्वावगमोऽपि कथम् ? तथात्वप्रतिपादकाऽऽगमादिति चेत् तर्हि तथात्वप्रतिपादकवचनैः स वाच्योऽवाच्यो वा ? वाच्यत्वे दुर्निर्वचनीयताविरोधः। अवाच्यत्वे तत्परिज्ञानं दुर्घटम्। किञ्च, तत्तथात्वप्रतिपादकवचनानि प्रपञ्चमध्ये वहिर्वा ? मध्ये चेत् तर्हि तान्यपि वाच्यान्यवाच्यानि वा ? वाच्यानि चेत् तर्हि तद्वत् प्रपञ्चस्यापि वाच्यता। अवाच्यानि चेत् तर्हि यानि वक्तुमशक्यानि तैः प्रपञ्चमिथ्यात्वं कथं प्रतिपादयितुं शक्यम्। अथ द्वितीयो विकल्पस्तर्हि तानि सत्यान्यसत्यानि वा ? सत्यानि चेत् तर्हि अद्वैतवादहानिः। असत्यानि चेत् तर्हि न तैः काऽपि सिद्धिः। अथ व्यवहारसत्यानि तर्हि व्यवहारोऽपि ज्ञानरूपोऽज्ञानरूपो वा ? ज्ञानं चेत् तर्हि प्रपञ्चान्तर्वहिर्वा सत्यमसत्यं वेति तदेवाऽऽवर्तते।

किञ्च, प्रपञ्चशब्देन सर्वे पदार्थाः एकः कश्चिद् वा विवक्षितः ? एकश्चेत् तन्न युक्तं यतः केनापि पृष्टे भो ! एतद्वस्तु तव कीदृशमित्युक्तेऽवाच्यमिति न वक्ष्यते तूष्णीमपि न स्थास्यते भवता किन्तु समग्रमपि तत् स्वरूपमाख्यास्यते। तथा च सति जातं वाच्यत्वम्। अथ सर्वे, तर्हि यथा एकस्तथा सर्वेऽपि भवन्तु वाच्या का नाम क्षतिः। अथ सामस्त्येन एकस्यापि स्वरूपं प्रतिपादयितुं न शक्यं तर्हि सामस्त्येन ब्रह्मणोऽपि स्वरूपं तथैवास्ति(स्तु)। एवमनिर्वाच्यत्वं विचार्यमाणं कथमपि

न जाघटीति । तस्मात् कदाग्रहं मुक्त्वा प्रपञ्चस्य मायाया ब्रह्मणोऽपि च वाच्यत्वमेव स्वीकार्यमिति दृश्यत्वहेतोरसिद्धतोद्भावनप्रकारः ।

अथास्य हेतोर्विरुद्धतोद्भाव्यते । तथाहि- साध्यविपर्ययेणैव यस्य हेतोरन्यथानुपपत्तिः स विरुद्धः । अत्र च प्रपञ्चमिथ्यात्वविपर्ययेणैवास्य हेतोर्वृत्तिः । तथाहि—यत्र यत्र दृश्यमानत्वं तत्रैव सद्रूपता । न हि असत् केनापि दृष्टम् । अथ जलचन्द्रादयोऽसन्तोऽपि दृश्यन्ते । न, जैनैस्तेषां सत्यत्वस्वीकारात् । दृष्टान्तस्य प्रतिवाद्यसिद्धत्वात् । तथाहि—जलचन्द्रस्वप्नज्ञानादि भावरूपं नैमित्तिकत्वात् घटवत् । जलबिम्बं भावः सम्यग्गमकत्वात् अग्निगमकधूमवत् । स्वप्नज्ञानं भावः ज्ञानत्वात् घटज्ञानवत् । शुक्तिशकलकलधौत-रज्जुभुजङ्गादयोऽपि न सर्वथाऽसत एव प्रतीयन्ते, धावल्यादिसमानगुणत्वेन भ्रान्तिजनकत्वादपटुदृशाम् । न हि निर्मलदृशां तत्र भ्रान्तिः । बहूनां मध्ये एकस्यैव कस्यचिदपटुदृक्त्वात् । सर्वथाऽसदपि चेत् दृश्यते तदा षष्ठभूतमपि क्वचित् दृश्यताम् ।

अथानैकान्तिकता हेतोर्भाव्यते । यस्याऽन्यथानुपपत्तिः सन्दिह्यते सोऽनैकान्तिकः । सन्दिग्धविपक्षवृत्तित्वेन निर्णीतविपक्षवृत्तित्वेन च सा द्विधा । अयं च निर्णीतविपक्षवृत्तिकः । तथाहि—न हि यत् दृश्यं तन्मिथ्यैव । परब्रह्मणो दृश्यत्वेऽपि सत्यत्वेन स्वीकारात् । किञ्च, दृश्यत्वं कस्यापेक्षया युष्मदाद्यपेक्षया योग्यपेक्षया वा ? योगिनां तु सर्वं प्रत्यक्षमेवास्ति । भवदादीनां तु मेर्वादयोऽप्यदृश्याः । अथादृश्यं परब्रह्म अव्यवहार्यत्वात् खपुष्पवत् । एवं तर्हि नास्ति परब्रह्म अदृश्यत्वात् अव्यवहार्यत्वाच्च खपुष्पवदेव । तथाऽयं पक्षः प्रत्यक्षबाधितः प्रत्यनुमानबाधितश्च । प्रत्यक्षबाधा, तावदाबालगोपालाङ्गनाप्रसिद्धैव । अनुमानबाधा चेत्थम्—प्रपञ्चोऽपि मिथ्या न भवति असद्विलक्षणत्वात् आत्मस्वरूपवत् । तथा साध्यविकलश्चायं दृष्टान्तः शुक्तिशकलकलधौते प्रपञ्चान्तर्गतत्वेन मिथ्यात्वस्य साध्यमानत्वात् । अथेदमनुमानमसाध्यसाधकं मिथ्यारूपत्वात् जलचन्द्रवदिति चेन्न असाध्यसाधके गन्धर्वनगरशुक्तिशकलकलधौतादौ विपक्षे जलचन्द्रादौ सपक्षे पक्षे चास्मिन्ननुमाने मिथ्यारूपत्वस्यास्य हेतोर्वर्तनेनानैकान्तिकत्वात् । तदेवेदमनुमानं यथा यथा विचार्यते तथा तथा न क्षोदं क्षमते ।

तथा ग्रामारामादयः पदार्थाः प्रतिभासान्तःप्रविष्टाः प्रतिभासमानत्वात् प्रतिभासस्वरूपवत् । अत्र प्रतिभासः स्वतः परतो वा ? नाद्यः पक्षः घटपटादीनां स्वतः कदापि प्रतिभासाभावात् । न [illegible] पं कदापि जानन्ति । अथ

द्वितीयः सोऽपि न युक्तः, परस्य ज्ञाने चेदेते प्रतिभाताः तदेतावता तेषामसत्त्वं कथं भवेत् ? अथ ते सन्त एव सन्ति परब्रह्मणो विवर्ताः तर्हि ब्रह्म अजडं ते च जडा इति भेदः कथं ? यस्य यद्रूपं भवति तत् तदाकारमेव दृष्टम् । न हि घटपटादयो मृदाकाराद् व्यतिरिक्ता दृष्टाः कुत्रापि । किञ्चैवमनुमाने क्रियमाणे इत्थमप्यनुमानं भविष्यति—घटपटादयो दीपप्रभायां प्रविष्टाः दीप्यमानत्वात्, यद्दीप्यते तद्दीपप्रभायां प्रविष्टम् यथा दीपप्रभास्वरूपम तथा प्रतिभासो ज्ञानम् । यदि तत्र ग्रामारामादयः प्रविष्टास्तदा दृश्यन्ते कथम् ?, प्रतिभासो हि हृदयान्तर्वर्तते, तत्र प्रविष्टानां तेषां दर्शनाभावात् । अथ प्रदीपप्रभायां न घटपटादयः सर्वेऽपि दीप्यन्ते । एवं तर्हि युष्मदादिप्रतिभासेऽपि न परमाणुमन्दरपुरन्दरादयः प्रतिभासन्ते । तस्मान्न किञ्चिदेतत् । अथानुमानवैपरीत्यमप्यत्र सम्भाव्यते । तथाहि—प्रतिभासो ग्रामारामादिर्प्रविष्टः, तान् विना तस्य कुत्राप्यदृश्यमानत्वात् । यद् यद् विना कुत्रापि न दृश्यते तत् तत्रैवास्ति, यथा परमब्रह्मस्वरूपं परमब्रह्मणि, घटादिस्वरूपं घटादिषु । एवं च लाभमिच्छतो मूलहानिः ।

अथ विधिरेव साध्यते नाविधिस्तदप्यसत् । कुत्रापि भूतले घटपटादीनामभावे प्रतीयमानेऽविधेरपि प्रतीयमानत्वात् । किञ्च, घटपटादिषु विधौ साध्यमानेऽनन्त एव सिद्धाः परमब्रह्मवत् । अथोच्यते अनुवृत्ताकारं सत्तैकरूपं सर्वं प्रतीयते । एतदपि न, अनुवृत्तव्यावृत्ताकारस्य प्रतीयमानत्वात् । तथा चोक्तम्—

निर्विशेषं हि सामान्यं भवेत् खरविषाणवत् ।
सामान्यरहितत्वेन विशेषास्तद्वदेव हि ॥ [ श्लो० वा० आकृति० १० ]

अथ प्रपञ्चो मिथ्या अनात्मप्रकाशत्वात् । यत् सत्यं तदात्मप्रकाशं यथा परब्रह्म । अत्रानुमाने विपर्यासोऽपि कर्तुं शक्यः । तथाहि—परब्रह्म मिथ्या पराप्रकाशनात् । यत् सत्यं भवति तत् परप्रकाशकं दृष्टं यथा इन्द्रियज्ञान-भानु-प्रदीपादयः । अथ ब्रह्म परप्रकाशकं तदा सिद्धं प्रपञ्चस्य सत्यत्वं प्रकाश्यप्रकाशकयोरुभयोरपि सिद्धत्वात् ।

अथ भावा ब्रह्मविवर्ता सत्त्वैकरूपेणान्वितत्वात् । यद् यद्रूपेणान्वित तत् तदात्मकमेव यथा घटपटादयो मृद्रूपेणान्विताः मृदात्मका एव, सत्त्वैकरूपान्वितं च सकलं वस्तु तस्माद् ब्रह्मविवर्तरूपमेव तत् । अत्रोच्यते—अनैकान्तिको हेतुः । न हि यद् यद्रूपेणान्वित तत् तदेव भवति । रूपान्वितत्वेऽपि घटपटादीनां रूपस्वरूपत्वस्याभावात् । प्रत्यक्षबाधितश्च पक्षः । घटपटादिषु ब्रह्मविवर्तत्वस्य केनाप्यप्रतीयमान-

त्वात् । न हि ब्रह्मणो घटपटादिरूपत्वेन विवर्तो युक्तः, विजातीयेन सह विवर्तायोगात् । इन्द्रियगम्येषु तथादर्शनात् । न हि मृद् अम्भोरूपेण विवर्तते तद्वा तद्रूपेण । सकलसिद्धमेतत् । अस्यान्यथात्वे प्रतीतिबाधा । घटपटादिषु च मृदन्वय एव दृश्यते, न चैतन्यान्वयः । अथ तत्र सत्तान्वयोऽस्ति । एवं न हि यत्र सत्ता तत्र प्रपञ्चान्वयोऽप्यस्ति । तथा च सति प्रपञ्चरूपमेव स्याद् विश्वम् । किञ्च, सत्तापि घटपटादीन् विना न भवति । न हि गुणिनं विना गुणान् कोऽपि दृष्टपूर्वी । तस्मादेतदप्यनुमानं भवदिष्टार्थप्रापणप्रवणं न भवति ।

किञ्च, ब्रह्मणः साधकं किं प्रमाणम् ? आगम इति चेत् तर्हि स तस्माद्भिन्नो वा स्यादभिन्नो वा ? भिन्नत्वेऽद्वैतवादहानिः । अभिन्नत्वे साध्यसाधकभावानुपपत्तिः । किञ्च, आगमः अर्थरूपो वा स्यात् ज्ञानरूपो वा ? आद्यपक्षे प्रपञ्चसिद्धिः । द्वितीयपक्षे भिन्नत्वे ज्ञानद्वैतसिद्धिः । अभिन्नत्वे ब्रह्मैव केवलम् न तत्साधकागमो नाम प्रमाणं किञ्चित् । अथ, आगमः अर्थरूपो ब्रह्मसाधकः अर्थोऽपि ज्ञानरूप एव । एतदपि विचार्यमाणमसङ्गतमेव । अर्थस्य ज्ञानरूपत्वासिद्धेः तथाप्रतिभासाभावात् । तथाप्रतिभासाभावेऽपि तस्य तथारूपत्वं चेत् साधयिष्यते तर्हि सर्वं सर्वात्मना साध्यं साध्यव्यवस्थाया युष्मदायत्तीभूतत्वात् । अथ ब्रह्मैवाऽऽगमरूपं स्वसाधकं तर्हि आगमः पदवाक्यरूपो वाच्यः, ब्रह्म च अवाच्यम् तयोरैक्यं कथं स्यात् ? एकत्वे वा ब्रह्मैव, नागमप्रमाणं तस्माद् भिन्नं किञ्चित् ।

अथ प्रदीपः स्वसाधकः एवं ब्रह्माऽपीति चेत् तर्हि आगमो ब्रह्मसाधक इति बालप्रलपितं जातम् । किञ्च, प्रदीपः स्वप्रकाशको जनानाम्, परब्रह्म च कस्य स्वप्रकाशकं इति वाच्यम् ? जन्तूनामिति चेत् तर्हि परब्रह्मणा जन्तूनां स्वरूपं ज्ञाप्यते इति तात्त्विकत्रितयसिद्धिः । एवं सति 'एकमेवाद्वितीयं ब्रह्म" इति वचनमात्रम्, ज्ञाप्यज्ञापकाद्यङ्गीकारात् ।

किञ्च, सर्वदेहेषु एकस्यैव निर्विशेषस्य परब्रह्म[ण]स्तात्त्विकत्वे एकस्य मुक्तौ सर्वेषा मुक्तिः, एकस्य बन्धे सर्वेषां बन्धः, एकस्य पीडायां सर्वस्य पीडा, एकस्य सौख्ये सर्वस्य सौख्यमेवाभियुज्यते । अथैकस्मिन्नपि देहाधिष्ठातरि यथैकस्य पादस्य पीडाया नापरस्य पादस्य पीडा एवं समानेऽपि ब्रह्मणि यथादृष्टमेव पीडाद्यङ्गीकार्यम् , एतदप्यसङ्गतम् । पादपीडायां तस्यैव देहाधिष्ठातुरेकस्यैव पीडाद्यङ्गीकारात् सौख्येऽपि तस्यैव सौख्यास्वादात् न तु पादादेः । किञ्च, वय देहाधिष्ठातारं सांशम् एवाङ्गीकुर्महे । तथा च क्वापि पीडा क्वापि सौख्य इत्यादि युज्यत एव । भवद्भिस्तु परमब्रह्म निरंशमेवा-

ङ्गीक्रियते । तथा च सति एकरूपमेव युज्यते न त्वनेकरूपम् । अनेकरूपत्वे वा सांशमनित्यं तदङ्गीकार्यम् तथा च स्वमतक्षति । एक देहाधिष्ठातृ, एकं जगद्व्यापकं ब्रह्मेत्याद्यपि न युक्तम् । ब्रह्मणो द्वैरूप्ये चैकत्वहानिः । एवं च युष्मन्मते परमब्रह्मणः साधकं न किञ्चित् घटाकोटिसंटङ्कमाटीकते ।

किञ्च, एकमेव परब्रह्म यदि परमार्थसत्यं तदाऽपरं सर्वमप्यपरमार्थम् । एवं च सति भवतां सुवर्णे लोष्टे, पुष्पस्रजि सरीसृपे, हालाहले परमान्नभोजने च समानैव प्रवृत्तिर्विलोक्येत । न चास्ति तथा । तस्मादस्ति कोऽपि विशेषः । किञ्च, एकस्यैव परमब्रह्मणस्तात्त्विकत्वात् तस्य च सर्वत्र समानत्वात् श्वपाककृतपाके ब्राह्मणकृतपाके च समानैव भवतां भोजनवृत्तिर्युज्यते । किञ्च, श्वपाकस्पृष्टानां भवतां स्नानमपि न युक्ति[युक्त]म्, उभयोरपि भवतो· परमब्रह्मविवर्तत्वात् पावित्र्य-हेतुकत्वेन जलादे· कस्याप्यस्वीकाराच्च । अथ लोकव्यवहारेण सर्वं प्रमाणम् । एवं लोकव्यवहारश्च चण्डालादिभिरपि क्रियमाणोऽस्त्यतस्तेऽपि स्वसाध्यसाधका भविष्यन्ति । किञ्च, एकस्यैव परमब्रह्मणस्तात्त्विकत्वेनाङ्गीकारे ब्राह्मणक्षत्रियादिवर्णविभागोऽप्ययुक्तः । तदेवमद्वैतवादस्य विचार्यमाणस्याघटमानत्वात् सिद्धं प्रमाणप्रमेयरूपं सकलं तत्त्वम् । तथा जैनमतमेव सकलपरवादिनिराकरिष्णुत्वेन विजयते ।

दुर्वादिकोलमदमर्दनसिंहरूपं
स्याद्वादसश्रवणनष्टकुयुक्तिपङ्क्ति ।
रागादिदोषरहितं सहितं गुणौघैः
जैनं मतं विजयते विजयप्रदायि ॥

[इति] परमब्रह्मोत्थापनस्थलम् ।

भुवनसुन्दरसूरिकृतं स्थलम्
य इह उज्ज्वलधीः प्रयतिष्यते ।
शठकुवादिकणोऽनणुयुक्तिभि·
प्रतिहतो लुठयिष्यति तत्पदो· ॥

इति श्रीभुवनसुन्दरसूरिविरचितं स्थलं संपूर्णम् ।

*

जिनमण्डननिबद्धम्

# ॥ हेतुविडम्बनस्थलम् ॥

प्रणम्य श्रीमदर्हन्तं परमात्मानमव्ययम् ।
[1]हेतोर्विडम्बनोपायो निरपायैः प्रतायते ॥

इह हि यः कश्चिद् विपश्चित्प्रचण्डप्रामाणिकप्रकाण्डश्रेणीशिरोमणीयमानः, सर्वाङ्गीणाऽनणीय'प्रमाणधोरणीप्रगुणीभवदखण्डपाण्डित्योड्डामरतां स्वात्मनि मन्यमानः, स्वान्यानन्यसमसौजन्यधन्यत्रिभुवनमान्यवदान्यगणाऽवगणनानुगुणानणुतत्तद्भणितिरणरणककरं रणन्निरस्समानाभिमान', अप्रतिहतप्रसरप्रवरनिरवद्यसद्यस्कानुमानपरम्परावोभुवितनिस्तुषमनीपाविशेषोन्मिषन्मनीषिपरिषज्जाग्रत्प्रत्यग्रोदग्रमहीयोमहिमसन्मानः, शतमखगुरुमुखाब्जविमुखताकारिहारिसर्वतोमुखशेमुषीमुखराऽसङ्ख्यसङ्ख्यावद्विख्यात---पर्षदि विदिततर्ककर्कशवितर्कणचण' प्रामाणिकग्रामणीः प्रमाणयति, तस्याशस्याहङ्कारप्राग्भारतिरस्काराय चारुविचारचातुरीगरीयश्चतुरनरचेतश्चमत्काराय च किञ्चिदुच्यते । हं हो मनस्विन् ! मान्यमनीषिमनोमनोहरविनोदाय प्रशस्तशब्दार्थसार्थविन्याससौवनवोपन्यासप्रोल्लासलीलायितदर्शनाय च यदनुमानमवादि, वादिवृन्दारकवृन्दपुरन्दरेण निष्प्रतिभप्रातिभवता भवता तत्र 'आदौ हेतुना साध्यसिद्धिर्विधेया धीधनेन' इति कृत्वा साध्यमेव किञ्चिद् विचार्यते ।

यथाहि—यदत्र पवित्रानुमाने साध्यमभ्यधायि भाग्यलभ्यसभ्यहर्षप्रकर्षाधायि तत् किं स्वरूपतः सिद्धस्वभावं बोभूयादसिद्धस्वभावं वा ? न तावदसिद्धस्वभावम्, तस्य हि सकलोपाख्याविकलताविख्यातखरविषाणप्रख्यत्वेन साध्यत्वाऽघटनात् । तथारूपस्यापि साधने सप्रश्रयाश्रयासिद्धेर्दुर्निवारत्वात् । साध्यस्वरूपासिद्धौ चेह हेतो. 'यत्र यत्र साधन तत्र तत्र साध्यम्' इत्येवंरूपव्याप्ति. तदुपपत्तिप्रकाशनोपक्रमोऽपि वन्ध्यास्तनंधयभागधेयवर्णनमिव कस्य हास्याय न स्यात् प्रशस्यात्मन ? ।

अथ सिद्धस्वभावमिति मन्येथास्तथापि किं तद् भवत. सिद्धस्वभावमुत सर्वेषां वा ? न तावत् सर्वेषाम् । न हि कोऽपि विकसत्प्रवेकविवेकवाचस्पति' सर्वेषां सिद्धस्वभावसाध्यसाधनाय चेक्लिश्यते । न हि क्वापि धवलस्य धवलीकरणम् पिष्टस्य पेषणम् चर्वितस्य चर्वणं वा केनापि दृष्टमिष्टं वा ।

अथ भवत इति समतं तर्हि तत्रापि तत् किमभीप्सितं भवेदनभीप्सितं वा ? नाऽनभीप्सितम्, यत स्वानभिप्रेते साध्ये साध्यमाने धीमतोऽनित्यत्वसाधने साङ्ख्य-

---

१ पञ्चम्यन्तो लिङ्गप्रतिपादकवचनरूपो हेतु यथा धूमोऽग्नेर्लिङ्गम् । २ निर्दूषण' ३ श्रेष्ठः ।

त्रीकते । तत्राद्यो नानवद्य' यतः साध्यसत्त्वस्य पूर्वमेव प्रतिपादितत्वात् । नापि द्वितीयः । न हि कोऽपि प्रामाणिकग्रामणी. प्रमाणाविषयीभूतस्य साध्यस्य प्रमाणविषयीकरणाय रणरणकपरायणो वोभूयते । किञ्च, साध्यस्य प्रमाणाविषयत्वे हेतुप्ररूपणमपि निराश्रयत्वमशिश्रियदेव । न हि क्वापि मातरमन्तरेण सुतरत्नजननमहोत्सव प्रोत्साहशालिनाम्, ग्रामं विना वा निस्सीमाभिरामसीमानिवेशव्यवस्था । अथ तृतीयेऽपि साध्यस्यायथार्थत्वं किं प्रमाणनिराकृतत्वेन उत व्यभिचारित्वेन किं वा विसंवादित्वेन प्रणिजागर्येत ?। प्रमाणनिराकृतत्वमपि किं तदानीम् कालान्तरे वा ? तदानीमित्यङ्गीकारे 'अनुष्णः कृष्णवर्त्मा' 'कृतकमाकाशम्' 'शुचि नरशिर.कपालम्' इत्यादिवत् प्रमाणादिनिराकृतत्वेन साध्यत्वाऽघटनात् , हेतो. कालात्ययापदिष्टत्वापत्तेश्च निराकृतस्वसाध्यधर्मविशेषणता-कुट्टिनी पक्षपृष्ठिलग्ना कथं निवारणीया वा । कालान्तरे प्रमाणनिराकृतत्वस्य सम्प्रत्यात्मनामविषयत्वात् । तन्न निराकृतत्वेनाऽयथार्थत्वम् । नापि व्यभिचारित्वम् । तत्रापि कि यत्र यत्र साधनं न तत्र तत्र साध्यमिति देशत. कि वा यदा यदा साधनं न तदा तदा साध्यमिति कालतो वा ?। किं चातः । उभयथापि व्यभिचारित्वे हेतोरनैकान्तिकताकलङ्कपङ्कपङ्किलत्वं कथमपि न प्रक्षालयितुमल भूयते । किञ्च, भवताऽपि साध्यसाधनयोर्देशकालाभ्यां व्याप्तिप्रकटनपटुतामन[ङ्गीकारात्] व्यभिचारित्वेऽस्य स्वयमेव निराकरिष्यमाणत्वात् । तन्न व्यभिचारित्वम् । विसंवादित्वमपि किं संवादाभावेन वा स्यादुत विरुद्धसंवादेन वा ?। यद्याद्य. प्रकारः प्रचारकारी तदा हेतोरसिद्धता प्रोद्धतपामरोपरीरम्भारम्भवद् दुर्भगीभावस्य ऋभुविभुनापि पराभवितुमशक्यत्वात् । द्वितीये तु विरुद्धता उद्धतबुभुक्षितराक्षसी साधनस्य कण्ठपृष्ठिविलग्ना न कथमपि पश्चात्कर्तुं प्रभूयते भूतपतिनापि । तन्न साध्यस्याप्रतीतता सम्भविनी । तदभावे दुरुपपादमेव साध्यम् । तदभावे हेतोर्व्याप्तिवर्णनं सकर्णानां गगनाङ्गणोद्गतप्रगुणारविन्दलीलामनुशीलयत्यविकलां कलाशालिनाम् ।

अथ भवतु भवदभिमत यथाकथञ्चित् साध्यम् । न तत्र वयं विवदामहे । परं "विदुषां वाच्यो हेतुरेव हि केवल" [प्रमाणवा० ३.२८] साध्यसिद्धिनिवन्धनमिति कृत्वा सोऽपि कश्चिद्विचारपदवीमधिरोप्यते । तथाहि—स कि भवन्निरूपितो हेतु' सकलकलाशालित्वान्त.समीहितसल्लक्षणपुरस्कृत' स्यादाहोस्वित् परोलक्षदक्षविक्षेपितलक्षणवैमुख्यसमालिङ्गितो वा ? इति पक्षोभयी । तत्र यदि द्वितीया भित् तर्हि हेतोर्निर्लक्षणत्वेन साध्यसिद्धावकिञ्चित्करत्वात् । अकिञ्चित्करस्य च कार्यसिद्धावनादरणीयत्वात् । न हि कोऽपि प्रामाणिकीभूय भूय' प्रामाणिकसभायां निर्लक्षणत्वेनाकिञ्चित्कर हेतुमभिदधीत । अथ प्रथमा भिदा यदा प्रतीतिपथातिथीक्रियते तदा निशिततरदुर्द्धरधारो-

द्धुरातिवक्रचक्रकनिपातनिर्दलितमस्तकत्वान्नोच्छ्वसितुमप्युत्सहते । तथाहि—हेतुः स्वात्मनः सिद्धिसौधाधिरोहाय साक्षादक्षामलक्षणप्रणयितामपेक्षते, लक्षणं च व्याप्तिप्राप्तिम्, व्याप्तिरपि हेतुम्, हेतुश्च लक्षणम्, लक्षणं च व्याप्तिम्, व्याप्तिरपि हेतुम्, हेतुश्च लक्षणमित्यावर्तः प्रवर्ततेऽतः स्फुट एव सर्वतो धारालकरालचक्रकप्रचारः सुरेश्वरगुरुणापि प्रणाशयितुमशक्यत्वात् । तथा हेतुः स्वसिद्धये लक्षणमुखप्रेक्षितामवलम्बते, लक्षणमपि स्वसिद्ध्यर्थं व्याप्तिद्वारा हेतुमिति दुरुत्तरेतरेतराश्रयोऽपि सप्रश्रयं पृष्ठिलग्नो न मनागपि विश्रामाय मनो वितनोति ।

अथ बोभूयतां सतां माननीयो युष्मदीयो हेतुरयं कथमपि लक्षणलक्षितः । परं किं तल्लक्षणं लक्षणज्ञैः प्रज्ञाप्यते प्रज्ञाऽवज्ञातपुरुहूतसूरिभिः । अथ निश्चितव्याप्तिमल्लिङ्गमिति तल्लक्षणमिति चेत् ननु केयं व्याप्तिः ? निश्चिताविनाभाव एव व्याप्तिरिति चेत् तर्हि कोऽयमविनाभावः ? किं साधनसद्भावे साध्यसद्भाव इत्यन्वयरूपः केवलः प्ररूप्येत, किं वा साध्याभावे साधनाभाव इति केवलव्यतिरेकस्वरूपः, उतोभयथा वा ? इति कल्पनात्रितयी प्रगुणगुणत्रयीव सर्वत्राप्रतिहतप्रसरा प्रसरीसरीति । तत्र तावदाद्या हृद्या न विद्यावतां हृदि, यतः केवलव्यतिरेकिणो हेतोरहेतुत्वप्राप्तेः । केवलव्यतिरेकिणोऽन्वयित्वेन पक्षादन्यत्रापि सद्भावे केवलव्यतिरेकित्वायोगात् । केवलान्वयिरूपाविनाभावादेव व्याप्तिसमाप्तौ 'सात्मकं जीवच्छरीरं प्राणादिमत्त्वात्' इत्यादि केवलव्यतिरेक्यनुमानानां 'पर्वतोऽयं वह्निमान् धूमात्' इत्याद्यन्वयव्यतिरेक्यनुमानाना [च] प्रामाण्यप्राणव्यपरोपणपापसन्तापः कथं शान्तिं प्रापणीयः । नापि द्वितीया, केवलान्वयिनि हेतावव्याप्तिप्राप्तेः । न हि केवलान्वयिनः क्वापि साध्याभावसाधनाभावौ सम्भवतः । साध्यसाधनयोः क्वाप्यभावे च सकलवस्तुनिष्ठत्वलक्षणस्य केवलान्वयित्वस्य निरूपयितुमशक्यत्वात् । नापि तृतीया अद्वितीयानन्दाय । अन्वयव्यतिरेकिणि तत्सद्भावेऽपि केवलान्वयिनः केवलव्यतिरेकिणश्च प्रत्येकं तदभावात् । एवं च केवलान्वयि-केवलव्यतिरेकिहेत्वोः प्रामाण्यं सकलप्रमाणशास्त्रोक्तं कथं निर्वाहणीयम् ?।

किञ्च, भवतु निश्चिताविनाभावो हेतुलक्षणम् परम् अविनाभावनिश्चयोऽपि दुरुपपादः । तथाहि—अविनाभावो हि साध्यसाधनयोः परस्परं सार्वत्रिकदेश-सार्वदिककालाऽव्यभिचारित्वम् । तन्निर्णयश्च साम्प्रतं सर्वज्ञमन्तरेणेतरेण कर्तुं न पार्यते । न हि कतिपुचिद् व्यक्तिषु कदाचित् साध्य[साध]नयोरव्यभिचारित्वोपलब्धावपि सार्वदिकः सार्वत्रिकश्च तथाभावः सम्भावयितुमपि शक्यः । कुत्रचित्कदाचिदन्यथाभावोऽपि विभाव्यत एव गोपालघटी-शक्रमूर्धादौ धूमसद्भावेऽपि वह्नेरनुपलम्भात् । तन्न निश्चिताविनाभावो हेतोर्लक्षणत्वेन प्ररूपणीयो निपुणशिरोमणिभिः ।

स्येवानभीप्सितसाध्यधर्मविशेषणत्वदूषणापत्तिः पक्षेऽनिवारणीया स्यात्। अथाभीप्सितमपि किं भवतः सर्वेषां वेति द्वयी गतिः। न तत्राग्रेत्वरी प्राग्रहरा गतिः, सर्वेषामभीप्सितत्वे विप्रतिपत्तेरभावेन साध्योपन्यासस्य मुधा प्रयासप्राप्तेः। अथ भवत एवेति प्राग्रहराऽप्येतना गतिर्मनिमता प्रतायते। तत्रापि किं तद् विशेषरूपं स्यादुताहो सामान्यरूपं वा? न तावद् विशेषरूपम्, तस्य हि नियतैकधर्मिव्यक्तिमात्रनिष्ठत्वेनान्यत्राननुयायित्वात्। तथात्वे च निदर्शनस्य साध्यविकलता कलावता कथमुन्मूलनीया? अन्वयव्याप्तिरपि साध्यसाधनयोः सपक्षसद्भावबलेन जल्प्यमाना प्रलापमात्रमेवात्र। अथ सामान्यरूपम् तत्रापि किं तन्नित्यमनित्यं वा स्यात्? न तावन्नित्यं तस्य साध्यत्वायोगात्। पूर्वमसाध्यमधुना तु साध्यमिति स्वभावभेदापत्त्याऽनित्यत्वप्राप्तेः। भवतु वा नित्यं परम् अर्थक्रियासंमुखं वा तद्विमुखं वा? अर्थक्रियासांमुख्यं तस्य क्रमेण यौगपद्येन वा? इत्याद्यनेकानल्पविकल्पकल्पनाया अपरिसमाप्तेर्न साध्यसिद्धिर्युगान्तेऽपि।

अथैतद्भयात् तत् साध्यमनित्यमङ्गीकुर्वीथाः। तत्रापि किं तत् क्षणिकं वा कियत्कालावस्थायि वा स्यात्? न तावत् क्षणिकम्, तस्य हि तथात्वे द्वितीयक्षणभावी हेतुः किं साधयेत्। न हि पूर्वमेव यशःशेषस्य पश्चाच्चिकित्साप्रस्तावः; साध्यस्य तु क्षणविनाशित्वे हेतोराश्रयासिद्धिबन्धकीकलङ्कोऽपि केन पराक्रियते?

अथैतद्दोषदोषाचरप्रचारत्रस्तः कियत्कालावस्थायि साध्यं मन्येथास्तत्रापि किं तत् प्रतीतमप्रतीतं वा बोभूयेत? प्रतीतमपि किं [सर्वापेक्षया] भवदपेक्षया वेति पक्षद्वयी। सर्वापेक्षयेति पक्षे कक्षीक्रियमाणे समाप्तिसौधमध्यमध्यासीन एव विवाददुर्धरकेसरी यतः सर्वप्रतीते वस्तुनि 'आपो द्रवाः' इत्यादिवद् विवादायोगात्। तस्यापि साधने न मन्दरपुरन्दरादयोऽपि साध्यत्वमासादयेयुः। प्रतीतसाध्यधर्मविशेषणत्वपक्षदूषणापत्तेरनिवार्यत्वात्। न हि कोऽपि मनस्वी [सर्वस्वी]कृतप्रतीतसाध्यसाधनाय साधनोपन्यासक्लेशमाशिश्रीयते। अथ भवदपेक्षयेति पक्षोऽपि दक्षोदितेनोदितो न स्थेमानमधिगच्छति। तथाहि—तत् साध्यं भवतः प्रतीतं प्रमाणतोऽन्यथा वा? न तावदन्यथा, अतिप्रसक्तिपराहतत्वेन युक्तिरिक्तत्वात्।

अथ प्रमाणतस्तत्प्रतीतिरिति प्रणिगद्येत चातुर्वैद्यहृद्येन। तत्रापि किं तत् प्रमाणं सामान्यात्मकं विशेषात्मकं वा? सामान्यात्मकमपि किं ज्ञानं वाऽन्यद् वेति विकल्पयुगली मञ्जुलमरालयुगलीव विमलीभावमाबिभ्रती प्रतीतिपथमवतेतीर्यते। अन्यदपि किं सन्निकर्षो वा कारकसाकल्यं वा? द्वयोरप्येतयोरज्ञानि(न)त्वेन स्वपरानिश्चायक-

त्वात् प्रमाणप्रगुणानणुपङ्क्तौ प्रवेशानर्हत्वात् पवित्रश्रोत्रियश्रेणाविव चाण्डालस्य। ज्ञानमपि किमबाधितानुभवस्वभावं किं वाऽव्यभिचार्यनुभवस्वभावं भवेदिति विकल्पद्वयं भीमार्जुनद्वयमिव समग्रप्रतिपक्षपक्षविक्षेपबद्धकक्षं पुरस्ताद् विस्फुर्तिमत् प्रसरीसर्ति। तत्राप्याद्ये पक्षे तस्याबाधितत्वं कि तात्कालिक कालान्तरीय वा परिकल्प्यते। न तावत् तात्कालिकम्, गुरुतरमरुमरीचिकानिचयचुम्ब्युदकादावतिप्रसक्तिपराभूतत्वेन विदुषाम नादरणीयत्वात्। कालान्तरीयबाधविरहस्यासर्वज्ञाऽविज्ञेयत्वात्। तन्नाबाधितानुभवस्वभावं ज्ञान प्रमाणत्वेन प्रीणयति प्रवगान्तर्वाणिप्राणिगणान्। द्वितीयोऽपि विकल्पो नानल्पकल्पनातल्पमधिरोहति। तत्रापि कि यत्रार्थस्तत्र ज्ञानमिति देशतः किं वा यदाऽर्थस्तदा ज्ञानमिति कालतो वाऽव्यभिचारित्व प्रोच्येत प्राञ्चच्चातुरीगरीयसा। उभयथाऽपि न घटाकोटिमाटीकतेऽव्यभिचारित्वम् यतो ज्ञानार्थयोर्विलक्षणस्वभावत्वेन पृथक् पृथक् देशावस्थायित्वेन पूर्वोत्तरकालभावित्वेन च परस्परमविनाभावस्य स्वप्नान्तरेऽप्यविभावनात्। तन्न सामान्यात्मकप्रमाणतो भवतः साध्यप्रतीति' प्रीतिमुत्पादयेत्।

अथ विशेषात्मकमिति मति सापि न मतिमतां रतिदायिनी यतस्तदपि किं प्रत्यक्षमनुमानमागमो वा स्यात्? । प्रत्यक्षमपि किमैन्द्रियमतीन्द्रियं वा ? अतीन्द्रियमपि योगिसत्कम् मानसं वा ? न तावद् योगिसत्कम्, तस्य च साम्प्रतक लीनानां मलीमसात्मनां दूरापास्तत्वात्। नापि मानसम्, तस्यापीन्द्रियानुयायित्वेनेन्द्रियाध्यक्षोक्तदोषावकीर्ण त्वात्। ऐन्द्रियमपि किं भवदीयम् सर्वीय वा ? न तावत सर्वीयम् यत' सर्वेषां प्रत्यक्षप्रतीते वस्तुनि पुर परिस्फुरत्स्फुटघटवद् विसवादासम्भवेन साध्यत्वाऽयोगात्। भवदीयमपि किं सविकल्पकं निर्विकल्पं वा स्यात् ? सविकल्पकमपि कि सवादोपेर्ज(तं) वाऽन्यथा वा। सवादोऽपि तस्य किं स्वत' परतो वेत्याद्यावर्तनेन परोलक्षैरपि वर्षैर्न विकल्पकल्पनाऽनल्पजल्पविश्रान्ति। नापि निर्विकल्पकम् तस्य शब्दप्रवेशावकाशाभावेन असत्कल्पत्वात्। नाप्यनुमानम्, तदपि किं प्ररूप्यमाणं प्रामाणिकेनैतदेव स्यादन्यदेव वा ?। एतदेवेति पक्षे परस्पराश्रयः सप्रश्रयमाश्रयत्येव। अथान्यदेवेत्युच्यते तर्हि न गर्हिताऽनवस्थावल्लिरुल्लसन्ती [शक्या व्यावर्तयितुम्]। आगमोऽपि भवदीयोऽन्यदीयो वा ? इति चर्च्यमानो जगदर्च्यचतुरमचर्चिकाभिर्न क्षणमपि विश्राणयति मनोविनोदं सुमनोजनानाम्। तन्न प्रतीतं साध्यम्।

अथाप्रतीतमिति विकल्पो जल्पोद्यतैर्जल्प्यते तत्रापि किमप्रतीतत्वं वादिन प्रतिवादिनो वा आहोस्विद् द्वयोर्वेति त्रयी गति'। न तावद् वादिन यतस्तस्य साध्याप्रतीतौ साध्योद्भावनाऽभावान्निग्रहस्थानापत्तेश्च। अथ प्रतिवादिनोऽपि तदप्रतीति. किं तदसत्त्वेन प्रमाणाविषयत्वेन उतायथार्थत्वेन वा स्यात् ? इति विकल्पत्रयी त्रिनेत्रपवित्रनेत्रत्रितयीव

अथवाऽस्तु सलक्षणो हेतुः परं तल्लक्षणमपि सलक्षणं [विलक्षणं] वा स्यात्? विलक्षणत्वक्षिति· क्षितिपतिनापि न रक्षितुं क्षमीभूयते। सलक्षणत्वे तस्यापि लक्षणं प्ररूपणीयम्। एवमनवस्थादौस्थ्यं तदवस्थमेव।

किञ्च, तल्लक्षणं सकलस्वलक्ष्यव्यक्तिभि· सह निश्चितव्याप्तिकं कथ्यते किं वाऽनिश्चितव्याप्तिकमिति गतिद्वयम्। तत्र न तावदनिश्चितव्याप्तिकम् तस्यातिव्यापककलङ्कपङ्किलत्वेन लक्षणत्वाभावात् उन्मत्तवाक्यवत्। अथ निश्चितव्याप्तिकम् तर्हि किं सकलस्वलक्ष्यव्यक्तिभि· सह लक्षणस्य व्याप्तिनिश्चय[.] प्रमाणात् प्रमाणकोटिमारोपणीयोऽनर्णीयोधिषणैरप्रमाणाद्वा? न तावदप्रमाणादप्रमाणस्य निश्चायकत्वाघटनात्। यदि पुनरप्रमाणमपि निश्चायकमित्यनुताण्ठीयते शिष्टप्रशिष्टैस्तदा समग्रप्रमाणान्वेषणं निष्प्रमाणकोटिमाटीकिष्ट स्पष्टमेवेष्टसाधकम् अप्रमाणादपि निश्चयादिकार्यपरम्पराभ्युपगमात्।

अथ प्रमाणाद् व्याप्तिनिश्चय इत्युररीचर्करांचक्रे तार्किकचक्रचक्रवर्तिना तर्हि तत् कि प्रमाण सलक्षणं विलक्षणं वा?। विलक्षणत्वे पूर्ववद् दोषमषीकालुष्यपोषः। सलक्षणत्वे तु तल्लक्षणं निश्चितव्याप्तिकं लक्ष्यव्यक्तिभि सहानिश्चितव्याप्तिक वा? अनिश्चितत्वे पूर्वलक्षणेन किमपराद्ध तव येन तन्निराकुरुषे। निश्चितत्वे तु निश्चयोऽपि किं प्रमाणादप्रमाणाद् वा? प्रमाणमपि सलक्षणमलक्षणं वेत्याद्यावर्तनेन सतताऽनवस्थास्थिरदौस्थ्यनिस्सीममहिमा न हि मानशालिना कल्पान्तेऽपि व्यपासितुं शाशक्यते।

अथास्तां प्रशस्तान्तर्वाणिमान्यात् प्रमाणाल्लक्षणस्य व्याप्तिनिश्चयः सचेतसाम्। परं कि तत् प्रमाणम् प्रामाणिकंमन्यै· प्रमाणीकरिष्यते—किं प्रत्यक्षमाहोस्विदनुमानं वा? प्रत्यक्षमपि किं भवदीयमन्यदीयं वा समासादयत्युदयपदवीम्। भवदीयमध्यक्षं भवदीयसौधमध्यसञ्चारिसहचारिण्याः पुर· सञ्चार्यमाणं चारिमाणमाचनीस्कद्यते। किञ्च, एतद्धेतुलक्षणं सकलकलापव्यापिनीसमग्रस्वलक्ष्यव्यक्तीर्व्याप्नोतीति भवदीयमध्यक्ष निश्चिनोतीति कस्य मनस्विनो मनसि विश्वासाय जाजायते। एवं चावापन्नोपनता भवतः सर्वज्ञतापत्ति। तथा च कुचर्चचर्वणं नीरसस्तरसभक्षणप्रायमनाश्रयणीयमेव भवेत्। तत्र भवदीयप्रत्यक्षाल्लक्षणव्याप्तिनिश्चय·। अन्यदीयमपि प्रत्यक्षं लक्षणव्याप्तिनिश्चायकं भवता ज्ञातमज्ञातं वा भवेत्। अज्ञातत्वे भवतो वराकस्य किमायातम्। न हि महिमसत्तमसोमदत्तगृहेऽनणुमणिगणश्रेणिसम्भवे सम्भवेद् भवतोऽसुन्दरदारिद्र्यमुद्राद्रावण द्रावणम्। अथ ज्ञातमिति मतिस्तर्हि तज्ज्ञातृत्वमपि ज्ञानादन्यतो वा? ज्ञानमपि किं भवदीय परकीयं वा? उभयमपि किं प्रत्यक्षरूपमनुमानरूप वा? प्रत्यक्षानुमाने अपि निश्चितप्रामाण्ये उतान्यथा इत्याद्यावर्तनेन न क्वापि विकल्पकल्पना कल्पान्तेऽपि विश्राम्यति। अथ भवतु वा यस्य कस्याप्यध्यक्षवृत्तिमान्यं

साक्षाल्लक्षणव्याप्तिनिश्चायकम्, परं तदपि किं विलक्षणं [सलक्षणं] वा भवेदिति भेदद्वयी। नाद्या निरवद्या, यतो विलक्षणत्वेनाकिञ्चित्करत्वापत्तेः । द्वितीयभिदि तु सलक्षणमप्यक्षं निश्चितप्रामाण्यम् किंवा अनिश्चितप्रामाण्यं स्यादिति विकल्पौ । अनिश्चितप्रामाण्ये अतिप्रसङ्गरङ्गतुङ्गमातङ्गसङ्गमोल्लासः । निश्चितप्रामाण्यमित्याद्ये विकल्पे तन्निश्चयोऽपि किं [स्वतः परतो वा] ? स्वतः प्रामाण्यनिर्णये सर्वेषामविप्रतिपत्तिप्रसक्तिः। तथा च भ्रान्ताभ्रान्तव्यवस्था दुरवस्थास्थानीमाशिश्रियदेव । तैम(मि)रिकादिप्रत्यक्षाणामपि प्रामाण्यं केन प्रोद्भटेन पराभूयेत ? परत. प्रामाण्याङ्गीकारे परमपि ज्ञानम् ? किमन्यद् वा ? नान्यत् तस्याश्रुतेः । श्रुतावपि स्वपरानिश्चायकत्वेन प्र(प्रा)माण्यायोगात् । ज्ञानमपि किमेकसन्तानम् ? भिन्नसन्तानं वा ? एतद् द्वयमपि किमेकजातीयम् ? [भिन्नजातीयं] वा ? उभयमपि किं निश्चितप्रामाण्यमन्यथा वेत्यादि पूर्ववत् सकलविकल्पावतारणेनानवस्थादोषकालुष्याददयकदर्थनातादवस्थ्यं गीर्वाणप्रभुणापि पराणेतुमशक्यत्वात् । तन्न प्रत्यक्षाल्लक्षणव्याप्तिनिर्णयः प्रीणयति ।

अथानुमानं लक्षणव्याप्तिनिश्चायकं यदि जागर्तीपि मनीषिजनरञ्जनाय तर्हि किमेतदेव स्यात् ? अन्यदेव वा ? एतस्माल्लक्षणव्याप्तिनिश्चयेऽन्योन्याश्रयः प्रथितोऽतिथिरवसरागत' कथ पराणुदते सार्ववैद्यवैशारद्यहृद्यहृदयैः सहृदयैः ? तथाहि—एतस्मादनुमानाल्लक्षणव्याप्तिनिर्णयसिद्धिः, लक्षणव्याप्तिनिर्णयसिद्धौ चैतदनुमानसिद्धिरिति । अन्यदपि किं सलक्षणम् विलक्षण वा ? अलक्षणस्य निश्चायकत्वे सर्वानुमानलक्षणप्राणव्यपरोपणप्रगुणपापपङ्ककालिमा न प्रलीयते । अथ सलक्षणम्, तत्रापि किं तल्लक्षण निश्चितम् अनिश्चितं वा ? निश्चयोऽपि प्रमाणादप्रमाणाद् वा ? प्रमाणमपि प्रत्यक्षमनुमान वेत्यादिनाऽऽवर्तनेन युगसहस्रैरपि न सलक्षणहेतुसिद्धिः साधीयस्तां देधीयते ।

किञ्च, हेतु सलक्षणश्चेद् भवत. सम्मतस्तर्हि तल्लक्षणं सामान्यात्मकं वा बोभूयात् ? विशेषात्मकं वा ? न तावत् सामान्यात्मकम्, तस्यानुवृत्तिप्रत्ययजनकत्वेन व्यावृत्तिधर्मविशेषरूपत्वात् , 'व्यतिरेकी हेतुविशेषो लक्षणम्' इति वचनात् । अथ स्वव्यक्तिष्वनुवृत्तिस्वभावत्वेऽपि सकलाहेतुव्यक्तिव्यावृत्तिजनकत्वेन सामान्यरूपस्यापि तस्य न लक्षणमनुपपन्नमिति चेत् तर्ह्यनुवृत्तिव्यावृत्तिरूपोभयस्वभावत्वेन सामान्यविशेषात्मकत्वापत्तिः स्यात्, तथा च विरोध. सानुबन्धः कथं न भवेत् ?। अथास्तु वस्तुवृत्त्या सामान्यात्मक लक्षणम्, पर तत् किं सकलहेतुव्यक्तीनामेकमनेक वा कथ्येत तथ्यवादिना ? यद्येक तर्हि निखिलहेतूनामेकलक्षणलक्षितत्वेन भेदाभावप्रसक्ते' लक्षणभेदाऽविनाभूतत्वाद्धि लक्ष्यभेदस्य । तथात्वे च केवलान्वयि-केवलव्यतिरेकिहेतुभेदकथा कथाशेषतामेव विशेषयेत् । किञ्च, एकमपि लक्षणं सकलस्वहेतुव्यक्तिषु वर्तमान किं सामस्त्येन प्रव-

रोवृत्येत ? किंवा एकदेशेन ? इति द्विपक्षीराक्षसी प्रत्यक्षीबोभवीति । तत्र यदि प्रथमः प्रथ्यते प्रथीय स्वान्तैस्तदा तस्य नियतैकहेतुव्यक्तिपरिनिष्ठितत्वेन समस्तान्यहेतुव्यक्तिषु वर्तनाऽनुपपत्तेः । तथा च व्यक्तमेवापरहेतुव्यक्तीनामलक्षणत्वापत्तिविपत्तिः सम्प्रसक्तिः । अथैतदभयादेकदेशेनेति पक्ष. साक्षाद्विशुद्धोभयपक्षैर्दक्षैः कक्षीकरिष्यते तदा सकलसाधनव्यक्तीनां लक्षणैकैकदेशलक्षितस्वैकैकदेशान् विहाय शेषापरदेशेषु निर्लक्षणत्वं जायमानं केनोत्कटेनापि पराचेक्रियेत । तथा लक्षणस्य सामान्यात्मकत्वेन सांशतापत्तिरपि दुर्निवारा । सामान्यस्य निरंशत्वेन तदात्मलक्षणस्यापि निरंशत्वात् । तन्न निखिलहेतुव्यक्तीनामेकं लक्षणमाख्यायमानं सङ्ख्यावता ख्यातये जायेत । अथानेकमित्यङ्गीक्रियते तदापि विशेषरूपतापत्ति , अनेकरूपत्वाद् विशेषाणाम् । तत्र च पुरस्तान्निराकरिष्यमाणविशेषात्मकपक्षदूषणोद्घोषणाऽनिवारितप्रसरेति नानेकरूपमपि लक्षणं प्ररूपणीयम् । तन्न सामान्यात्मक लक्षणं हेतोरनुगुणम् ।

अथ विशेषात्मकं तर्हि तस्य [लक्षणत्वानुपपत्तिः] नियतैकस्वहेतुव्यक्तिलक्षकत्वेन समग्राऽपरहेतुव्यक्तीनामलक्षकत्वात् स्वाश्रयमात्रविशेषकत्वाच्च । तथा चोक्तम्—"स्वाश्रयविशेषकत्वाद् विशेषाः" इति । अथ प्रतिहेतुव्यक्ति पृथक् पृथक् लक्षणमिष्यत इति स्वीकुर्यास्तर्हि लक्षणानन्त्यं केन वार्येत । हेतुव्यक्तीनामानन्त्यात् तल्लक्षणानामपि तथाभाव. सावधान एव विभाव्यते । तथात्वे च न कल्पान्तेऽपि सकलहेतुपरिज्ञानम् । तन्न विशेषात्मकमिति पक्ष· सूपक्षेप· ।

अथास्तु विशेषात्मकमपि, परं हेतोस्तद् बेभिद्यान्न वा ? यदि न बेभिद्यते तदा हेतुर्वा स्याल्लक्षणं वा , न तु पृथक् द्वयम् , परस्परमपृथग्भूतत्वेनैक्यापत्तेर्दुर्वार्यत्वात् । अथाबेभिदीत् तर्हि हेतोर्निर्लक्षणत्वापत्तिसज्जनिर्लज्जकुट्टिनी कण्ठपीठनिविष्टा कथमुत्सारणीया । किञ्च, लक्षणस्य भिन्नत्वे 'हेतोरेवेदं नान्येषाम्' इत्येषा का विशेषानुरक्तचेतसां वचोवैचित्री । अथ हेतुना सह सम्बन्धाद्धेतोरेवेदं नान्येषामिति चेत् तर्हि कस्तयोः सम्बन्ध· । लक्ष्यलक्षणभाव एवेति चेत् ननु सोऽपि सम्बन्धो हेतु-लक्षणाभ्यां भिन्नोऽभिन्नो वा बोभूयेत । अभिन्नत्वे हेतु-लक्षणे द्वे एव न तृतीयः कश्चिल्लक्ष्यलक्षणभावसम्बन्धः । भिन्नत्वे तु सोऽपि सम्बन्धस्ताभ्यां सम्बद्धोऽसम्बद्धो वा विशुद्धेद्धबुद्धिनाऽभिधीयते । यद्यसम्बद्धस्तर्हि हेतु-लक्षणयो सम्बन्धाभावस्तदवस्थ एव , यतो लक्ष्यलक्षणभावसम्बन्धस्य ताभ्यां सहासम्बद्धत्वेन पृथग्भूतत्वात् । अथ सम्बद्धस्तदा किं सम्बन्धात् अन्यथा वा ? । यद्यन्यथा तर्हि हेतु-लक्षणे अपि तथा किं न भवेताम् , किं लक्ष्य[ल]क्षणभावसम्बन्धकल्पनाऽनल्पक्लेशेन । अथ सम्बन्धादिति मतिमता प्रोच्यते तर्हि सोऽपि सम्बन्धः

किं लक्ष्यलक्षणभावसम्बन्धेन सह सम्बद्धोऽसम्बद्धो वेत्याद्यावर्तनेनानवस्थादोषविडम्बना निविडं भवन्त निपीडयन्ती न कथमपि विगमारामसम्मुखीनं मनो विरचयति । तन्न हेतोः सलक्षणत्व कथमपि विचार्यमाणं चतुरचेतसि चमत्कारकत्वेन प्रतिबाभाति ।

अथ भवतु भवत्तुष्टिपुष्टये सलक्षणं साधनं परं तदपि सर्वत्र स्वसाध्यसाधनाय सम्यक् निश्चिताया व्याप्तौ सत्यां सत्यताञ्चित साधीयः सावधाननिरवधिधीधनैरभिधीयते नान्यथेति रीतिः सुप्रीतये सुनीतिमताम् । तत्र तावत् व्याप्तिरेव परमाप्तप्रवीणैः सप्रणयं विचार्यमाणा न प्रमाणानुगुणताधिरोहिणी । तथाहि—व्याप्तिर्भवन्ती किंसाधनसाध्यव्यक्त्योर्वोभोति १ उताहो साधनत्व-[साध्यत्व]जात्योर्वा २ आहोस्वित् साधनवत्साध्यवतोः ३ किं वा साधनत्ववत्साध्यत्ववतोः ४ उत साधनवत्त्वसाध्यवत्त्वयोरिति ५ पक्षपञ्चतयीं त्रिजगद्विषयसञ्चारितया निरूपणीयाऽनणीयोऽनुपमस्वरूपरूपरसादिविषयपञ्चतयीव सकलजीवलोकविलोकनीया कनीयःकमनीयव्यापारसारा प्रसरीसरीति वरीयसी ।

तत्र नाद्यो विद्योतते सद्योविद्योतिविद्योद्योगिहृदयसहृदयसमुदयसदसि प्रणिगद्यमानः । यतो व्याप्तिर्हि त्रिकालविषयी साध्यसाधनसम्बन्धः, तद्ग्रहणस्य च व्यक्तीनामानन्त्येन सर्वदाऽप्यसम्भवात् । न हि सर्वज्ञं विना केनापि सर्वव्यक्तयो विशेषतोऽवगम्यन्ते । एवं च सति सर्वोपसंहारवती यावता व्याप्तिर्न विज्ञायते न तावता साध्यसाधनयोः सार्वत्रिकी सार्वकालिकी च प्रतिबन्धसिद्धिरुल्लालस्येत । न च सार्वत्रिकप्रतिबन्धसिद्धिमन्तरेण क्वाप्यनुमानं प्राणसधारणाय प्रगुणायते । तन्न व्यक्तिरूपयोर्व्याप्तिरिति पक्षः क्षेमकारः । किञ्च, साध्यसाधनयोर्व्याप्तिः किं 'यत्र यत्र साधनं तत्र तत्र साध्यम्' इति देशरूपा निरूप्येत, किं वा 'यदा यदा साधनं तदा तदा साध्यम्' इति कालरूपा, युगपदुभयस्वभावा वा ? पक्षत्रयमपि विचारपदवीमारोप्यमाणं कृपापात्रतामेवावगाहते । तथाहि—उद्गतो नभश्चन्द्रः, जलचन्द्रोदयदर्शनात्, आसीत् पूर्वस्मिन् देशे वृष्टिः, उत्तरत्र तथाविधवारिपूरविलोकनात्, भविष्यति वारिवाहवृष्टिः, तादृग्वारिवाहविभावनात्, उदेष्यति रोहिणी, कृत्तिकोदयात्, उदेष्यति श्वः सविता, अद्यतनादित्योदयदर्शनात्, उदगाद् मुहूर्तात् पूर्वं पूर्वफल्गुनी, उत्तरफल्गुनीनामुदयोपलब्धेरित्याद्यनुमाना-नामनेकेषां देश-कालोभयेभ्यो विप्रकृष्टानां कार्यकारण-पूर्वचर-उत्तरचरहेतुविशेषाणां देशकालोभयैः क्वापि व्याप्त्यनुपपत्तेरहेतुत्वप्राप्ते । तथा च सकलानुमानप्राणप्रहाणपापव्यापारपङ्ककालिमा न प्रलीयते कल्पकोटिभिरपि । अपि च यदि 'यत्र यत्र साधनं तत्र तत्र साध्यम्' इति देशतो व्याप्ति

ररीचरीक्रियते तर्हि साध्येऽपि साध्यापत्ति केन निषिध्येत। तद्यथा 'यत्र यत्र साध्यं तत्र तत्र साधनम्' इत्येवंविधीयमाने यथा साध्ये साधनं तथा साधनाविनाभूतं तत्र साध्यमपि विलोक्यतेऽन्यथा हेतोरनैकान्तिकत्वप्राप्तेः। साध्ये साधनसद्भावेऽपि साध्याभावात् तेन च व्यभिचारात्। साध्ये साध्याङ्गीकारे च सप्रश्रयोऽयमात्माश्रय स्वात्मबन्धु. कथं न प्राघुणकीभवेत्। देशव्याप्तिमात्राङ्गीकारे समग्रजाग्रत्प्रामाणिकमान्ये धूमानुमानेऽपि सत्यताभिमानोऽभिमानशालिना कथं प्रथापथमानीयते। तत्र च देशव्याप्ते. स्वप्नदशायामपि विभावनाऽभावात्। तथाहि—गगनमण्डलतलावलम्बी धूमः, पर्वताखर्वनितम्बसम्बन्धी च धूमध्वज इति क्व देशव्याप्तिरिति।

नापि साधनत्व-साध्यत्वजात्योरित्येवंरूपो द्वितीयोऽद्वितीयोचितमुखायान्तर्मुखाणाम्। न हि क्वापि यत्र साधनत्वरूपा जातिस्तत्र साध्यत्वरूपा जातिरिति प्रतीयते स्वस्वव्यक्तिनिष्ठयोस्तयोर्जात्योर्भिन्नाधिकरणत्वात्। न कदाचिदपि कुत्राप्यपेक्षितस्वाधिकरणा जातिरन्याधिकरणां जातिमपेक्षते स्वसिद्धये। न हि घटत्वं पटत्वाविनाभूतं पटत्वं वा घटत्वाविनाभूतं क्वापि कलावता विलोक्यते, तयोर्भिन्नाधिकरणत्वेनापेक्षितनियतैकस्वव्यक्तितया परस्परमपेक्षाया दूरापास्तत्वात्।

तृतीयपक्षोऽपि तृतीयप्रकृतिसततानुकृतिप्रतिबद्धरति· कस्य हि मतिमतो हास्याय न स्यात्, यत· केवलव्यक्तीनामिव व्यक्तिविशेषितव्यक्तीनामप्यानन्त्यात्। तत्र चासर्वविदा प्रतिबन्धस्य ग्रहीतुमशक्यत्वात्। तद्ग्रहणे च सर्वेषामयत्नोपनतसर्वज्ञत्वप्राप्ते·, पूर्वोत्तरचरादिहेतूनामहेतुत्वप्राप्त्यादिदूषणोद्घोषणाया अवारणीयत्वाच्च। तथा य· साधनवान् स साध्यवानिति न सार्वत्रिको विश्वास· क्वापि सम्पद्यते। गोपालघटचादौ साधनसद्भावेऽपि साध्याभावस्य विभावनात्। किञ्च, यो यः साधनवान् स स साध्यवानित्येवं व्याप्तिसमये सर्वेषामपि साध्यवतां गृहीतत्वात् किं पुनस्तत्रानुमानप्रवर्तनेन। अथ व्याप्त्यवसरे साध्यवन्मात्रमेव साधनवद्व्यापकतया गृहीतं न तु नियतपक्षाश्रयः साध्यवान् इति चेत् तत्किमिदानीम् बहव· साध्यवन्त· ?। हन्त ! एव साधनवन्तोऽपि बहवो भवेयुरिति तदानन्त्यात् सम्बन्धग्रहणानुपपत्तिस्तदवस्थैवेति घटकुट्या प्रभातम्।

चतुर्थोऽपि न प्रार्थनीय· सार्थकत्वेन। जातिविशिष्टव्यक्तीनामप्यानन्त्येन पूर्वोक्तदूषणानतिवृत्ते.।

नापि पञ्चमश्चमत्कारकारी गरीयस्ताङ्गतानाम्। न हि नियतैकव्यक्त्यविनाभाविनी जाति स्वपृथग्भूतान्यव्यक्त्या सहाविनाभावमुत्पादयेत्। तन्न व्याप्तिकरणोपायो निरपायोऽस्ति येन तद्बलेन साधनं साधीय. स्यात्।

अथ भवताद् वा भवतामभिमता साध्यसाधनव्यक्त्यादीनां यथाकथञ्चिद् व्याप्ति' परं परस्परं साध्यसाधनयोः सा भवन्ती प्रमाणेन निश्चयपदवीमाप्यते प्रामाणिकप्रकाण्डैरन्यथा वा ? न तावदन्यथाऽतिप्रसक्तेरविश्वासाच्च । तथा च कुमारिल —

प्रमाणवन्त्यदृष्टीनि कल्प्यानि सुबहून्यपि ।
वालाग्रशतभागोऽपि न कल्प्यो निष्प्रमाणकः ॥ [ तन्त्रवा० २.१.२.५ ]

अथ प्रमाणेन । तत्रापि किं प्रत्यक्षेण १ किं वानुमाने[न] २ उताऽर्थापत्त्या ३ आहोस्विदभावप्रमाणेन ४ अथ किं वा तर्केण ५ इति स्फुरदनल्पजल्पोल्लासिनी विकल्पपञ्चतयी समग्रप्रतिपक्षपक्षविक्षेपदक्षा साक्षात् प्रत्यक्षीबोभोति ।

न हि तत्राध्यक्षेण व्याप्तिनिर्णयः क्वापि कर्तुं पार्यते श्रीमदार्यैः' । न हि सकलव्यक्तिवर्गनिष्ठस्यान्वयस्य व्यतिरेकस्योभयस्य वा प्रत्यक्षत्वमसर्वज्ञस्य सम्भवति । तत्प्रत्यक्षत्वे वाऽनुमानप्रवृत्तेर्वैयर्थ्यप्राप्तेः स्पष्टमेव निष्टङ्क्यमानत्वात् सर्वस्य सार्वज्ञ्यप्राप्तेश्च ।

नाप्यनुमानेन, सततावस्थानानवस्थानदौस्थ्यप्राकट्यस्य पटुतमपाटूपटकोटिभिरपि विघट्टयितुमशक्यत्वात् । व्याप्तिनिर्णयमन्तरेणानुमानानुदये तत्तद्व्याप्तिनिश्चायकविकसदनुमानपरम्पराया दुर्निरूपत्वात् ।

अर्थापत्तिरपि न पृथक् सार्थकत्वेन प्रार्थनीया पृथुतमयशोविशालैस्तस्यास्तत्त्वतोऽनुमानानतिरेकित्वात् । अथ कदाचिदतिरेकोऽपि विवेकोपगतैरभ्युपगम्यते तदाऽर्थापत्त्यैवानुमानावसेयार्थाधिगमादनुमानस्य दूरापास्तत्वात् । तथाहि — साध्यसद्भावाभावे साधनस्यानुपपत्तिरिहार्थापत्तिः सततप्रसक्तिशालिभिरभ्युपगता । तथा च तयैवानुपपत्त्या लिङ्गिनोऽविनाभावाधिगतौ किं पश्चात्कृतक्षौरनक्षत्रपरीक्षासदृक्षेणानुमानेन प्रयोजनम् ।

नाप्यभावो व्याप्तिप्रादुर्भावविभावनप्रभु । स ह्येवं प्रमाणीक्रियते प्रामाणिकप्रवेकैः' — 'यदि साधनं विनापि साध्यं स्यात् तदा साध्यं विना क्वापि साधनोपलम्भोऽपि भवेत्, न भवति च कुत्रापि साध्यविनाकृतसाधनोपलम्भ' तस्मान्न साधन साध्यव्यतिरेकेण' इति । एतच्च प्राञ्चच्चेतोवृत्तिभिर्विचार्यमाण न चारुतामञ्चति । तथाहि—किं सर्वेषामसौ व्यभिचारानुपलम्भः प्रादुर्भावमाबिभर्ति किं वाऽनुमानकर्तुरनुपलम्भ उत योग्यानुपलम्भो वा भवेदिति भेदत्रयी त्रिपथगाप्रवाहत्रयीव जगत्त्रयीं पवित्रयन्ती ढौकते । न तावदाद्यो निरवद्यो विद्योतते, सर्वप्रमातॄणां व्यभिचारानुपलम्भस्य निश्चेतुमशक्यतया संशयाऽनतिवृत्तेः । न हि क्वाप्यर्वाग्दृशा सुदृशामपि समग्रप्रमातृमानसवृत्तय प्रत्यक्षा.

सम्पनीपद्यन्ते सद्यस्कताद्दशामलसकलकेवलज्ञानलीलां विना । न द्वितीयोऽपि प्रतीत-प्रीतये सजायेत, दुरावारव्यभिचारपिशाचदु:सञ्चारपुरस्कृतत्वात् । न ह्येकेन नोपलब्ध किमेतावता सर्वैरपि नोपलभ्यत इति रीतिरस्ति प्रशस्तनीतिनिपुणानाम्, अन्यथाऽन्धेनैकेन न त्रिभुवन दृष्टं तथाऽन्यैरपि न दृष्टं भवेत् । न हि नागरिकनरेण गवयो नोपलब्ध इत्येतावता ग्रामीणोपलब्धगवयस्यापलापः क्वापि प्राप्यते । तृतीयकल्पोऽपि नानल्पः । न हि केनापि सार्वत्रिकी योग्यानुपलब्धिरिष्टा दृष्टा वा । तस्या' सर्वत्र सर्वदा नियततयैवोपलभ्यमानत्वात् । यदुक्तं लीलावतीकारेण—

"सर्वादृष्टेश्च सदेहात् स्वादृष्टेर्व्यभिचारत' ।
योग्यादृष्टेरसत्त्वाच्च प्रतिबन्धो न सिध्यति ॥" [ ]

तन्नाऽभावप्रमाणेन व्याप्तिनिश्चयः ।

न तर्कोऽपि व्याप्तिविनिश्चयविधौ सावधानी, तर्कस्यापि व्याप्तिमूलत्वेनेतरेतराश्रयाद्यापत्तेः । तथाहि—व्याप्तिसिद्धौ व्याप्तिमूलतर्कसिद्धिस्तत्सिद्धौ च व्याप्तिसिद्धिरित्यन्योन्याश्रय. । व्याप्तिनिश्चयसिद्धौ तर्कापेक्षणम् । तर्कसिद्धौ चापरतर्कापेक्षणम् । तत्र चापरतर्कापेक्षणम् । तत्र चापरतर्कान्तरापेक्षणमित्यनवस्था वेति । किञ्च, यत् साधनं तत् साध्यपूर्वकमिति व्याप्तौ सिद्धायां यदकारणपूर्वकं तत् सदा स्यान्न स्याद् वा इति तर्केण प्रसङ्ग' प्रोद्भाव्यते । न चाद्यापि व्याप्तिः सर्वसाध्यसाधनव्यक्तीना सिद्धिसौधमध्यास्त इति तर्कोऽपि न व्याप्तिव्यवसायविधाने सातिशय । तन्न साध्यसाधनप्रतिबन्धावबोध' प्रमाणाधीनः साधीयो मेधाधारिभिर्विधीयते ।

किञ्च, साध्यसिद्ध्यै साधनं यदभ्यधायि तत्किं विशेषात्मक स्यादुताहो सामान्यात्मकं वेति कल्पनोभयी । तत्र नाग्रिमा समग्रोदग्रप्रत्यग्रधीमतां सम्मता । यतो विशेषात्मकत्वे साधनस्याभ्युपगम्यमाने नियतैकव्यक्तिनिष्ठत्वेनासाधारण्यस्वभावत्वात् । तथात्वे चानुवृत्तिप्रत्ययाजनकत्वेन साधनस्य सकलदेशकालकलापव्यापिसर्वोपसंहारव्याप्त्यनुपपत्ते' । या हि पक्षादिव्यक्तिविभागमन्तरेणापि समस्तसजातीयव्यक्तिसाधारण्येन व्याप्ति प्रदर्श्यते सा सर्वोपसंहारव्याप्ति' । तस्याश्च स्वाश्रयमात्रानुयायितया विशेषरूपसाधनस्याङ्गीकृते वाङ्मात्रत्वात् । व्याप्तेरनुपपत्तौ च साध्यसाधनयो' प्रतिबन्धाऽसिद्धि. । तदसिद्धौ च साधनात् साध्यसिद्धिमनोरथो नपुसकादपत्यप्रसववाञ्छानुकारी ।

अथ दुर्बलं वादिन दृष्ट्वाऽभ्युपगम्याऽपि ब्रूमहे—भवतु विशेषात्मकं साधनं परं तत् किं पक्षमात्रनिष्ठं वा सपक्षमात्रनिष्ठं वा पक्षसपक्षोभयमात्रनिष्ठ वेति विकल्पत्रितयी

त्रिवलीव तरलाक्षीणामुन्मीलति । न तत्र पौरस्त्य' प्रशस्तस्वस्तिदायी । पक्षमात्रनिष्ठत्वे हि हेतोः साधनविकलतादुमीह(दुर्महि)ला दृष्टान्तगलावलम्बिनी कथं विश्लेषणीया । न हि पक्षमात्रनिष्ठं साधनमन्यत्रनिष्ठमिति वक्तुं युक्तं निर्णिक्तयुक्तिसंयुक्तातिव्यक्तचेतसां सुमेधसाम् । तथा चान्वयव्याप्तिमूल' केवलान्वयी क्व च प्रवर्तेत ? नापि द्वितीय', हेतो' सपक्षमात्रनिष्ठत्वे हि पक्षधर्मताया अयोगात् । तदयोगे च हेतोरसिद्धतासमुद्धतबन्धुकीसम्पर्ककलङ्कपङ्कपङ्किलत्वमनिर्गलं कथं प्रक्षालनीयं निर्मलबहुलनीतिलीलायितसुकुमारहृदयै' । अथान्त्यपक्षोऽपि साक्षादन्त्यजजातिरिव त्याज्य एव ज्यायोवृत्तीनाम् । यतस्तत्र किं यदेव पक्षे तदेव सपक्षे किं वाऽन्यदेवेति कल्पनायुगली मञ्जुलकलमरालयुगली[व] विमलीभावं कलयन्ती कं लयन्ती [ती]व्रं प्रगुणयत्येव गुणज्ञगणचित्ताङ्गणेषु । तत्र यद्यन्यदेवेति कल्पना कल्पनामार्गगामिनी तदा पूर्वसञ्चारिताऽनवारितप्रसरसाधनविकलता-पक्षधर्मताऽभावरूपदोषमषीकालुष्यपोषः स्वान्तःसन्तोषशोषाय विशेषज्ञानां समुन्मिषत्येव । अथ यदेव पक्षे तदेवेत्यादिकल्पना परिकल्प्यतेऽनल्पजल्पाकैः तदा सततानुवृत्तिप्रत्ययोत्पादकत्वेन सामान्यरूपतापत्तेर्विशेषात्मकसाधनाय प्रादायि स्वहस्तेन जलाञ्जलिः प्राञ्जलहृदयैं । विशेषात्मकस्य स्वाश्रयमात्रनिष्ठत्वेन सर्वतोव्यावृत्तिप्रत्ययस्वभावत्वेन चोभयनिष्ठतायाः स्वप्नेऽप्यसम्भवात् । तन्न विशेषात्मकत्वं हेतोः सहेतुक हेतुज्ञै. प्रज्ञापयितुं शाशक्यते ।

अथ सामान्यात्मकमिति न द्वैतीयीकोऽपि कल्पः सश्रीकतयाऽधिरूढातिप्रौढतममनोषिमान्यतामधिगच्छति । यतस्तत्रापि किं परसामान्यात्मकम् अपरसामान्यात्मकं वा साधनं स्यात् ? तत्र यदि परसामान्यात्मकमिति पक्ष' स्वपक्षीकरिष्यते दक्षैस्तदा तस्य विश्वव्यापित्वेन निरवशेषव्यक्तिनिष्ठत्वापत्तिरनवारितप्रसरा । तथात्वे च विपक्षवृत्तेरपि सम्भवेन हेतोरनैकान्तिकत्वं विकसितमेव ।

अथ एतद्भयादपरसामान्यात्मकमित्युच्यते रुच्यवचोवैचित्रीचञ्चुभिः, तत्रापि किं तत्साधन साध्येन साकं सव्याप्तिकं स्यात् , अव्याप्तिकं वेति विकल्पयामलमविरलल्लल्लोलकल्लोललीलायितमनुशीलयत् प्रतिकलमुन्मीलति । तत्र यदि अव्याप्तिकमिति परिकल्प्यते तदा अतिप्रसङ्गरङ्गदुत्तुङ्गचङ्गरङ्गाचार्यो न मनागपि स्वरङ्गतिमसङ्गतिमारोपयति । व्याप्तिप्राप्तितिरस्कृतसाधनात् साध्यव्यवस्था स्थेयसी यद्यङ्गीक्रियते तदा 'धवलः प्रासादः काकस्य कार्ष्ण्यात्', 'नित्यः शब्दः कार्यत्वात्', 'अनित्य' शब्दश्चाक्षुषत्वात्' इत्यादयोऽपि सम्यग्घेतुतामाश्रयन्तः केन तिरस्करणीया भवेयु. ? ।

अथ सव्याप्तिकर्मिति सङ्कीर्यते मर्यादावर्यैः, तत्रापि व्याप्तिः सामान्यात्मकसाधनस्य साध्येन सह प्रोच्यमाना किं सामान्यात्मकेनोच्येत किं विशेषात्मकेन वा ? न तावद् विशेषात्मकेनेति कल्पना कल्पनार्हा। सामान्यात्मकसाधनेन सह विशेषात्मकसाध्यस्य सम्वन्धासम्भवेन व्याप्तेर्निर्मूलत्वात्। तथाहि—विशेषात्मकसाध्यस्य स्वाश्रयमात्रानुयायित्वेनान्यत्राऽनुगमाविधायकत्वात् 'यत्र यत्र साधनं तत्र तत्र साध्यम्, तदभावे न क्वापि साधनमुपलभ्यते' इत्येवरूपेण सर्वविषयिणी व्याप्तिः सम्भावयितुमपि न शक्यते किं पुनर्दर्शयितुम्। व्याप्तिर्हि प्रवर्तमाना सर्वोपसहारेणैव प्रवरीवृत्यते। न हि विशेषात्मकसाध्यस्य सर्वोपसहारः सर्वोपकल्पान्तेऽपि कल्पयितुं पार्यते। तथात्वे च हेतोः सन्दिग्धासिद्धतादुर्भगभामिनीकलङ्ककालिमोल्लासः प्रादुरासेव।

अथ सामान्यात्मकसाध्येनेति मुख्यपक्षः सङ्ख्यावद्भिराख्यायते स्वख्यातये; तत्रापि सामान्यात्मकयोः साध्य-साधनयोर्व्याप्तिर्जायमाना निस्समानाभिमानरतैः किं नियतव्यक्तिमात्रनिष्ठयोः किं वा अनियतव्यक्तिप्रतिष्ठितयोः प्रतिष्ठाप्येत प्रष्ठप्रतिष्ठागरिष्ठैः। यदि प्रथमोऽभ्युपगम्यते रम्यसम्यग्मतिसीमन्तिनीकमनीयपरिष्वङ्गरङ्गसङ्गिभिस्तर्हि सर्वोपसंहारव्याप्तिप्रकारसारकल्पकारस्कर[1]मूले निहित एव निशिततरधारकुठारप्रहारः स्वयमेव। न हि नियतव्यक्त्याश्रितयोरनियतव्यक्त्याश्रयणं क्वापि सम्भावनीयम्। न हि गृहाभ्यन्तरकोणकस्थितयोर्देवदत्त-यज्ञदत्तयोस्त्रिभुवनभवनव्यापित्वम्। नापि च नियतव्यक्तिनिष्ठयोः साध्यसाधनयोः प्रतिवन्धमात्रसिद्धौ सार्वत्रिकविकसत्प्रतिवन्धसिद्धिः। तदभावे च हेतोः संदिग्धासिद्धत्वं स्फुटमेव। यदि प्रतिनियतप्रतिवन्धसिद्धौ साधनानि साध्यसाधनाय परिकल्प्यन्ते जल्पजल्पाकैस्तदा 'अनुष्णोऽग्निर्दाहकत्वाद्धिमवत्, मथनजन्यत्वात् म्रक्षणवत् वा' इत्यादीन्यपि साधनानि सम्यक्साधनत्वश्रियं संश्रयेयुः। न चैतद् विलोक्यते। तन्न प्रतिनियतव्यक्त्याश्रितयोर्व्याप्तिः साधीयसी।

अथैतद्भीतैरनियतव्यक्त्याश्रितयोः सामान्यात्मकसाध्यसाधनयोर्व्याप्तिरुरीक्रियते, तत्रापि किं तयोः परस्परं प्रतिवन्धप्रतिवद्धयोरप्रतिवद्धयोर्वा व्याप्तिरिति द्विपक्षी वुभुक्षितराक्षसी साक्षाद्भवन्ती न कथमपि भवत्पक्षभक्षणमन्तरेणाक्षामकुक्षिः सम्पनीपद्यते सद्यः। यद्यप्रतिवद्धयोरिति भेदः प्रादुष्क्रियते तदा प्रसह्य सह्य-विन्ध्ययोरिव दास-चक्रीवतोरिव वा कस्तयोर्व्याप्तिविधानमनोरथः।

अथ प्रतिवन्धप्रतिवद्धयोरित्युद्घोष्यतेऽप्रतिघोषप्रतिभासितस्वान्तर्वृत्तिभिस्तत्रापि कस्तयोः सामान्यात्मकयोः प्रतिवन्धो निस्सम्बन्धवान्धवेन श्रीमताऽभिधीयते किं तादात्म्यम् ? किं वा तदुत्पत्तिः ? उताहो समवायः ? किंस्वित् साध्यसाधनभावो वा ?

१. कल्पकारस्कर· कल्पवृक्ष·।

तत्र न तावत् तादात्म्यावतारः सुखोत्तारः, साध्यसाधनयोः सर्ववादिभिर्निर्विवादं भेदेनैवोररीचरीकृतत्वात् । तयोः सिद्धासिद्धस्वरूपयोस्तादात्म्योपपत्तेर्निर्वीजत्वात् । तादात्म्ये ह्यभ्युपगते साध्यं साधनं वेकतरमेव भवेन्न तु पृथक् द्वयम् । तथा च, साध्योपन्यासे साधनोपन्यासस्य साधनोपन्यासे साध्योपन्यासस्य च स्वयमेव सिद्धत्वाद् न हि नाम कोपि छेको जनः पृथक् साधनोपन्यासप्रयासमाशेश्लिष्यते । एवं च सति निर्मायन्यायोपायशालिसकलकुशलकुलविदितातुलविमलानुमानावयवपञ्चकव्यवस्थाविलोपपापव्यापारोऽपार एव शास्त्रपारावारपारीणानाम् । तन्न तादात्म्यं सुघटघटाकोटिसण्टङ्कमाटीकते ।

नापि तदु[त्प]त्तिरपि सदुपपत्तिसम्पर्त्ति बाभक्ति । तथाहि—तदुत्पत्तौ सत्या किं साधनात् साध्योत्पत्तिः ? किं वा साध्यात् साधनोत्पत्तिः ? न भवेत् साधनात् साध्योत्पत्ति' तदाहि साध्यस्य साधननियतत्व स्यान्न साधनस्य साध्यनियतत्वम् । ततश्च साधनादविनाभावपुरस्सरसाध्यावधारणवर्णनामकर्णानां नभोऽम्भोजराजिविराजिसौरभ्यलीलामविकलमाकलयेदेव । अथ साध्यात् साधनोत्पत्तिरूपाऽपि तदुत्पत्तिः किमसार्वत्रिकी सार्वत्रिकी वा सोसूत्र्यते स्वतन्त्रेण भवता । न तावदसार्वत्रिकी पवित्रीभा[व]नां वरीभर्ति । यतो न नियततदुत्पत्तिप्रतिबन्धमात्रसिद्धौ सार्वत्रिकस्तथाभाव' सम्भाव्यः साध्यसाधनयोः । तमन्तरेणापि 'ब्राह्मणोऽय पित्रोर्ब्राह्मणत्वात्, पुष्पिता आम्राः पुष्पितैकाम्रदर्शनात्, विकसितानि कुमुदानि कुमुदबान्धवोदयात्' इत्यादीनां भूयसामप्यनुमानानां सत्यतया विलोक्यमानत्वात् । तत् प्रतिनियततदुत्पत्तिप्रतिबन्धमात्रप्रतिबद्धयोः साध्यसाधनयोरनुमानाङ्गत्वे को विश्वासः ? नापि सार्वत्रिकी तदुत्पत्तिः । तस्याः सर्वानुमानेष्वविद्यमानत्वात् । यदि तु तदुत्पत्तिरेव केवला साध्यसाधनयोः प्रतिबन्धसिद्धाङ्गत्वेन स्वीक्रियते तदा पूर्वचरोत्तरचरादिहेतूनामहेतुत्वं न प्रतिहन्येत । तेषां तदुत्पत्तः(त्तेः) क्वाप्यदृश्यमानत्वात् । तन्न तदुत्पत्तिसम्बन्धोऽपि सानुबन्ध' ।

नापि समवायो निर्मायविद्वज्जनसमवायरञ्जनाय सञ्जायते । तस्य जगद्व्यापकत्वेन नियतैकस्वभावत्वेन च सर्वत्र तुल्यत्वान्न हि प्रतिनियतसाध्येन सह साधनस्य सम्बन्धकत्वम् किन्तु विपक्षादिभिरपि, तथात्वे च विपक्षवृत्तेरपि सम्भवेन प्रसरिसर्त्येव स्फूर्तिमदनैकान्तिकत्वम् । भवतु वा समवायः, परं किंलक्षण' ? "अयुतसिद्धानामाधार्याधारभूतानां यः सम्बन्ध इहप्रत्ययहेतुः स समवायः" इति चेत् तर्ह्ययं साध्यसाधनयो. स्वप्नेऽपि विचार्यमाणो न सण्टङ्ककोटिकोटीरतामटाट्यते ।

तथाहि—युतसिद्धः पृथगवस्थिति' सा ययोर्नास्ति तौ तथा तयोः सम्बन्धः समवायः । न चायं सर्वदा युतसिद्धयो' साध्यसाधनयो' साधीयान् । तत्र समवायोऽपि साध्यसाधनयोरनुबन्धविधायक' ।

साध्यसाधनभावसम्बन्धोऽपि न परस्परं साध्यसाधनयो' सम्बन्धाधायकः । यतः सोऽपि तयोः किमेकाश्रयाश्रितयो. किं वा विभिन्नाश्रयाश्रितयोरिति द्वयी गतिः । तत्राद्यायां गतौ किं पक्षैकाश्रयसश्रितयोः किं वा सपक्षैकाश्रयसश्रितयोः प्रतिष्ठाप्येत ? किञ्चात' पक्षद्वयेऽपि 'यत्र यत्र साधनं तत्र तत्र साध्यम्' इति सर्वोपसंहारव्याप्ति-महासत्या. प्राणहत्यापापारोप. शिरसि सरसिरुहारोह इवायातः कथं पश्चात्क्रियते विपश्चिच्चाणाक्यैः । सार्वत्रिकव्याप्त्ययोगे क्व नामानुमानाङ्कुरप्ररोहः सर्वथा निर्बीजत्वात् । किञ्च, पक्षसपक्षरूपैकैकाश्रयाश्रितत्वे साध्यसाधनयोः शेश्रीयमाणे यथाक्रम पक्षधर्मतावैधुर्यजर्जरितत्वेन साधनस्यासिद्धतागाधनिश्शङ्कशार्किनीविकासितसततातङ्कः शङ्कुवद् हृदये निहितः कथमुत्तारणीयः । निदर्शनस्योभयविकलताऽविकलकलङ्कितदुर्ल्ललनासङ्गतिमालिन्यं च कथं निर्वालनीयं स्यात् ? एकव्यक्त्याश्रितत्वाभ्युपगमे गोशृङ्गयोरिव जीवस्यामूर्तत्वज्ञानवत्त्वयोरिव वा किं कस्य साध्यं साधकं वा भवेत्, तथा च साध्यसाधनभावसम्बन्धसम्भावनाऽपि न सम्भवी ।

अथ पृथगाश्रयाश्रितयोरिति विधा प्रधानतया प्रधार्यते विबुधधोरणीधुर्यैः । तत्रापि किं तयो परस्परं सापेक्षयोर्निरपेक्षयोर्वा ? न तावन्निरपेक्षयोरित्यनन्तर' पक्षः सूपक्षेपः । यतस्तत्र 'धवल प्रासाद' काकस्य कार्ष्ण्यात्, देवदत्तजाया रण्डा सोमदत्तस्याविद्यमानत्वात्' इत्यादिवद् व्याप्त्यनुपपत्ति[.] प्रतिबन्धाभावादिदोषपोषावतारस्य तादवस्थ्यात् । किञ्च, पृथक् पृथग् व्यक्त्याश्रितयो' साध्यसाधनयोः सर्वथा निरपेक्षत्वे कथ साध्यसाधनभावसम्बन्ध. ? न हि क्वापि घटस्थघटत्वं पटस्थपटत्वसाधनाय पटीयस्तां घटयति । अथ सापेक्षयोस्तत्रा(त्र) कि सापेक्षत्वमेकदेशावस्थायित्वेन किं वैककालभावित्वेन विभाव्येत । उभयथापि सापेक्षत्वेऽङ्गीक्रियमाणे कार्यकारण—पूर्वचरोत्तरचरादिहेतूना सर्वथापि देशकालानपेक्षाणां कथं सम्बन्धो गृह्यते गुणगृह्यैः । केषुचिद् गृहीतोऽपि न निश्शेषसाध्यसाधनाना परस्प[र]सम्बन्धसिद्धेरङ्गत्वात् जाजायते,सदेहाऽनिवृत्तेः । तत्र साध्यसाधकभावसम्बन्धोऽपि सामा[न्य]गुणगृन्य(ह्य)रूपसाध्यसाधनयोः सम्भवी ।

अथ बोभोतु भो. । तवाभिमतो योऽपि कोऽपि सम्बन्धः; न तत्र वयं किमपि कुर्महे काचपिच्यम् । परम् अपरसामान्यात्मक साधनं निश्चित विपक्षव्यावृत्तिमदन्यथा वा ?

न तावदन्यथा, हेतोः सदिग्धानैकान्तिकतापत्तेः। द्वितीयेऽपि निश्चितविपक्षव्यावृत्तिमत्त्वं किं सार्वकालिकं तात्कालिकं वेति कल्पनोभयी सभयीकरोति भवन्तम्। न तावत् तात्कालिकी। तथात्वे ह्युत्तरकालभाविविपक्षवृत्तेः सम्भावितत्वेन सदिग्धानैकान्तिकताया अनिवृत्तेः। न हि यावता साधनस्य त्रैकालिकी विपक्षव्यावृत्तिर्निश्चीयते न तावता व्याप्तेरनवद्यत्वमुत्पाद्यते । नापि सार्वकालिकी, तस्या असर्वज्ञाऽविज्ञेयत्वात्। किञ्च, भवतात् सार्वकालिकी विपक्षव्यावृत्तिः, परं सा निश्चिताऽनिश्चिता वा स्यात्? नाऽनिश्चिता, तस्या विश्वासाऽनङ्गत्वात्। [अथ निश्चिता] निश्चयोऽपि किं प्रत्यक्षेण किं वा परोक्षेण? प्रत्यक्षेण(णे)ति यदि मुख्यः पक्ष' प्रख्याप्यते दक्षलक्षमुख्यैस्तत्रापि किं तदध्यक्षमैन्द्रियमतीन्द्रिय वेत्यादिपूर्वप्रदर्शितभवदीयान्यदीयसविकल्पकनिर्विकल्पकादिप्रत्यक्षविकल्पावतारो दुर्वार एव। परोक्षमपि किमनुमानमागमो वा? नाऽप्यनुमानम्। तत्रापि पूर्वावतारिप्रकारसारोदारस्फारतरविकल्पानल्पप्रोज्ज्वलल्लोलकल्लोलमाला कथमुत्तरणीयाऽनणीयोधिषणैः। आगमोऽपि न सुखसङ्गमोल्लासी। सोऽपि किं भवदीयः परकीयो वा? एकैकोऽपि किं पौरुषेयोऽपौरुषेयो वेत्यादि दरिद्रजनगृहामुद्रकाचपिच्यं न कदाचनापि विरमेत । तन्न विपक्षव्यावृत्तिः शक्यते विधातुम् । विपक्षव्यावृत्तिनिश्चयनमन्तरेण साधनान्यभिधीयमानानि कं विशेषं पोपयन्ति विशेषज्ञसभायाम्? एवं विपश्चिद्भिर्विचार्यमाणा यदि सम्यग्घेतावपि हेत्वाभासता प्रतिपद्यते(येत) तदा प्रसर्पद्दर्पोद्धुरपरवादिनां किञ्चिन्मात्रसाधर्म्यवैधर्म्योपयुक्तहेतुमात्रबलाऽवलम्बनेन कथं समुज्जृम्भते सरभसं परिरम्भाय विजयलक्ष्मीः॥

श्रीसूरीश्वरसोमसुन्दरगुरोः शैक्षक्षमामण्डल-
ख्यातश्रीशशिगच्छदुग्धजलधिस्फुर्जत्सुधारोचिषः।
श्रीमद्वाचकनायकः प्रतिमतध्वान्तार्यमार्योदयः
शिष्यः श्रीजिनमण्डनः स्म तनुते हेतोरिदं खण्डनम्॥

इति हेतुविडम्बनस्थलम् । कृतः(तिः) श्रीजिनमण्डनस्य ।

श्रीमत्साधुविजयनिबद्धम्

# ॥ हेतुखण्डनपाण्डित्यम् ॥

अपरनाम

# ॥ वादिविजयप्रकरणम् ॥

## १. त्रिविधहेतुखण्डनम्

ॐ नमः सर्वज्ञाय

श्रीजिनं हर्षतो नत्वा वीरं विश्वातिशायिनम् ।
हेतुखण्डनपाण्डित्यताण्डवं मण्ड्यते मया ॥

अस्य व्याख्या । मया हेतुखण्डनपाण्डित्यताण्डवं मण्ड्यते । हेतोः साधनस्य, खण्डनं निर्दलनम्, तस्य पाण्डित्यं चातुर्यम्, तदेव ताण्डवं विदुरनरनिकरविस्मयावहत्वात् नृत्यम्, मण्ड्यते प्रारभ्यते इति यावत् । किं कृत्वा ? 'श्री' श्रिया चतुस्त्रिंशदतिशयरूपया उपलक्षितं तीर्थेशम्, जिनं केवलिनम्, विश्वातिशायिन लोकोत्तरातिशयम्, वीरं वर्धमान हर्षतो नत्वा प्रणम्येत्यर्थः ।

अस्य शास्त्रस्य सर्वपार्षदत्वात् कविः शिव-केशवयोरपि नमस्कारं करोति । मया हेतुखण्डनपाण्डित्यताण्डव मण्ड्यते । किं कृत्वा ? श्रीजिनं श्रिया लक्ष्म्या युतम्—एतावता—लक्ष्मीनारायणं नत्वा । जिनं कीदृशम् ? वीरं विना पक्षिणा—ईरिक् गतिकम्पनयोरिति गत्यर्थात्—ईर्ते गच्छति क्विपि वीरः तं वीरं गरुडवाहनमित्यर्थः । पुनः कीदृशम् ? विश्वातिशायिनं विश्वा देवाः तेषु अतिशायिनं इति केशवार्थः ।

अथ शिवं स्तौति । मया हेतुखण्डनपाण्डित्यताण्डवं मण्ड्यते इति प्राग्वत् । किं कृत्वा ? नत्वा । कम् ? वीरं 'वि' विरुद्धम्, ई कामं, ईरयति कम्पयतीति वीरः कामनाशनः शिवस्तम् । कीदृशम् ? श्रीजिन श्रीजः काम , स विद्यते यस्य, 'अतोऽनेकस्वरात्' [७।२।६। सिद्धहे०] इति 'इन्' इति श्रीजिनः, तं श्रीजिनम्—भिल्लीरूपां पार्वतीं वीक्ष्य सरागमित्यर्थः । पुनः किंस्वरूपम् ? विश्वा सम्पूर्णा, अतिर्ज्ञानम्, तस्य शा लक्ष्मीः, तत्र आयिनं प्राप्तम्, सर्वज्ञवत् ।

अथ कविः सम्प्रति विजयमानश्रीसुमतिसाधुसूरीश्वरं तन्नामाकर्षणपूर्वं स्तौति । हे वीरम् उकारात् परः ईर् गच्छन् अकारेण युक्तो मकारो यस्मिन् स [1]वीरम्, एतावता म इति सिद्धम् । तथा अश्च अश्च समाहारे अं, अवति गच्छतीति क्विपि ऊः, गच्छत् च तत् अं च तदस्तीति विन् वीरम् चासौ वी च वीरम्विन् [2]एवंविधः [3]सुआअति । [4]सा इति शब्दस्त 'अयि-वयि-पयि-मयि-गतौ', अयते इति 'शीलार्थे' णिनि आयिन्,

१ उ+ईर्+अम्=वीरम् । २ विरम्वि—ऊ+अ+व+इन् ३ श्वाति—सु+आ+अ+ति । अत्र शकारस्थाने सकार कल्पित. । ४ (शायि—) अत्रापि 'शा'स्थाने 'सा' कल्पित. तत 'सायि' इति साधितम् ।

एतावता सुमतिसा इति सिद्धम् । तथा नं नकारं अमति गच्छति इति नम् तम् एतावता ध इति सिद्धम् । पश्चात् कर्मधारये सम्बोधने हे वीरम्विश्वातिशायिनम् ! एतावता सुमतिसाध इति जातम् । हेतुखण्डं हेतुशब्दस्य खण्डं उकारलक्षणं यस्य स हेतुखण्डः । एतावता सुमतिसाधु इति जातम् । हे सुमतिसाधुगुरो ! त्वां अर्थान्नत्वा पाण्डित्यताण्डवं काक्वा न मण्ड्यते । अपि तु मण्ड्यते । त्वां कीदृशम् ? श्रिया गणधरलक्ष्म्या जिनमिव जिनम्, "तित्थयरसमो सूरी" इति वचनात् ।

अथ कविः स्वविद्यागुरुनमस्कारं करोति । श्रीजिनं नत्वा हेतुखण्डन-पाण्डित्यताण्डव मया मण्ड्यते । श्रीजिनं कीदृगम् ? हर्ष इति शब्दस्य ता लक्ष्मीस्तस्या उर्दीप्तिर्यत्र एतावता श्रीजिनहर्षगुरुस्त पश्चानुपूर्व्या वा जिनहर्षमिति प्रसिद्धं नत्वा । कीदृगम् ? वीरं श्रेष्ठम् , यद्वा उर्वृषध्वज. श्रीनाभेयस्त ईर्ते प्रतिज्ञापदेन परतीर्थिषु जानातीति क्विपि वीर्; यद्वा वीरं विक्रान्तं प्रतिवादिविजयेन; अथवा वीरं विराजमानं जगज्जाड्यिघ्नकयशसा तम् । पुनः कीदृगम् ? विश्वातिशायिनं विशिष्टा ये 'स्वा' स्वकीयाः साधवस्तेषु विद्यादिगुणैरतिशायिनम् अनन्यसामान्यगुणोपेतम् । पुनः कथंभूतम् ? हेतवो विषया अर्थात् ससारस्याश्रवद्वाराणि, तेषां खण्डनं निर्दलनं, तत्र पाण्डित्यं यस्य तं स्तुत्वा ताण्डवं बालचापलं मण्ड्यते प्रस्तूयत इति क्रियासंटङ्कः ।

ननु भो ! सकलकलिन्दिकादिकोकमलिनीसमुल्लासनसहस्रकरानुकारिव्याहाराः ! सुजनजनमनस्तापव्यापनिर्वापणप्रथमजलधरधारावधीरिवाग्व्यापाराः ! हृद्यानवद्यविद्या-विद्याधरोपरिरम्भणोपात्तविद्याधरावताराः ! विदुरनरनिकरचेतश्चमत्कारकारिमनोहारि-महीमण्डलविस्तारिमहिमाधाराः ! विक्रमाक्रान्तदिक्चक्रभूशक्रसभालङ्काहारानुकाराः ! मया यदनुमान विधीयमानमास्ते तदुभाकर्णि समाकर्ण्यता सकर्णाः ! सर्वान्तर्वाणि-वर्ण्यमानासवर्णवर्णाः ! ।

तथाहि--भू-भूधर-दिनकर-मकराकरादिकं जगद् बुद्धिमत्कर्तृकम् कार्यत्वात् । यद् यत् कार्यं तत् तद् बुद्धिमत्कर्तृकम्, यथा घटः । यद् बुद्धिमत्कर्तृकं न भवति तत् कार्यमपि न भवति, यथा व्योमादि । न तावदय हेतुरुद्धताऽसिद्धतासिद्धसीकोत्तरी-गरीयस्तरदुस्तरकटाक्षलक्षविक्षेपविक्षेपितः । सद्भूतानुभवसिद्धाविनाभावसिद्धधर्माधिकरण-विद्यासिद्धत्वात् ।

नापि दुर्द्धरविरुद्धतोद्धततर्कवितर्केन्धनकार्कश्यावरुद्धता धीधनैरुद्भावनीया विच-क्षणाक्षीणक्षोदक्षमाध्यक्षनिर्णीतविपक्षव्यावृत्तिव्याप्तिशक्तिप्रकोपपावकाहुतीभूतप्रत्यर्थिपक्ष-त्वात् ।

---

१. 'विश्वा' इति 'विस्वा' कल्पितम् ।

२ पु० कलिङ्गादि

नापि अनैकान्तिकाक्रान्तिविषमविपधरीविपातेगविधुरीभूतताऽप्याशङ्कनीया। स्वपक्षापक्षसाध्यवदवृत्त्यतिरिक्तपक्षनिर्णीतव्यावृत्तिमञ्जुलक्षितिरुहायतच्छायासु सुखनिषण्णत्वात्।

नापि कालात्ययापदिष्टतादुष्टदन्दशूकदष्टत्वं निष्टङ्कनीयम्। प्रत्यक्षानुमानागमाबाधितपक्षप्रयोगपक्षाधिराजपक्षान्तरश्रान्तविश्रान्तत्वात्।

नाप्यस्य हेतुर्नश्वरस्य प्रकरणसमतानङ्काक्रान्तत्वं शङ्कनीयम्। एतत्प्रतिपन्थिसमर्थप्रत्यनुमानाभावातपत्रपवित्रप्रभुताप्राप्तसाम्राज्यसुभगत्वात्।

एवं च समर्थासिद्धतादिदोषप्रत्यर्थिपृथुदैत्यकदर्थनप्राप्तविजयलक्ष्मीयौवनक्रनाथीकरणचर्णैलक्ष्मीकान्तेनामुना हेतुना स्वसाध्यसाधनविधौ सामर्थ्यमानं (सामर्थ्ये समर्थ्यमानं) केन निवारयितुं शाशक्यते शक्रपराक्रमेणापि?

उच्यतां मुच्यतां मौनं सिच्यतां कर्णकोटरम्।
स्वकीयगोरसोद्‌गारैरासारैरिव भूरुहः॥

इह हि सर्वाङ्गीणानणीयसुधावर्षीरिप्रमाणधोरणीप्रगुणीभवदखण्डपाण्डित्योड्डामरतां मन्यमानैः, सकलप्रवीणप्रामाणिकश्रेणिशिरोमणीयमानैः, निजनवोपन्यासविन्याससचमत्क्रियमाणकोविदपुरन्दरैः, तथाविधाभङ्गप्रमाणप्रयोगप्रकाशनाभिमुखीकृतविदुरनरनिकरैस्तत्रभवद्भिः शुभवद्भिर्भवद्भिरभिमतसाध्यसाधनाय यदनुमानमवादि वादिवृन्दारकपुरन्दरैर्माधिरकुवादिकुलफलदसमूलोन्मूलनदुर्द्धरसिन्धुरैस्तदनुमानं विचार्यमाणं न चारुतया चतुरचेतसां चेतसि चकास्ति। साध्यसिद्ध्यनिबन्धनत्वात्। साध्यसिद्ध्यनिबन्धनत्वं च विचारासहत्वात्।

तथाहि—ननु भवन्निरूपितो हेतुः किं निश्चितस्वरूपः उत अनिश्चितस्वरूपः? इति विमलानल्पविकल्पयुगलं वादीन्द्रवदनचन्द्रगाङ्गरङ्गदनुत्तरतरतरङ्गभङ्गीसुभङ्गीभूताविकलविपुलपुलिनादवतरत् कलमरालबालविमलयुगलमिव भवत्पुरतः प्रसरीसरीति।

अथ तत्र बहुतिथपृथुः प्रथमः कल्पः कल्पनापथमतिथीक्रियते प्रथीयस्तरप्रतिभाप्राग्भारपराबोमुवितजम्भारिगुरुभिस्तत्रभवद्भिर्भवद्भिः, तत्रेदं परीपृच्छ्यते—निजार्जयवर्यशःकर्पूरपूरसुरभीकृतत्रिभुवनभवनानां श्रीमतां भवता कुतस्तन्निश्चितस्वरूपत्वम्?—स्वतः परतः प्रमाणाद् वा? इति अद्वैतपक्षद्वयं भीमार्जुनद्वयमिव प्रतिपक्षपक्षलक्षविक्षोभदक्षं साक्षादुपतिष्ठते। तत्र पौरस्त्यश्चेत् प्रस्तूयते प्रास्तावस्तस्तम स्तौ(स्तो)-

---

२. दे० °करणचलण° ३ सकलदोषराहित्यम् अभङ्गत्वम्। ४ अय हेतुः साध्यसिद्धयनिबन्धनः विचारासहत्वात्। यो यो विचारासहः स स साध्यसिद्धयनिबन्धनः, यथाऽसिद्धादयः हेत्वाभासाः।

मैस्तदाऽव्यवधानेन स्वापेक्षणलक्षण आत्माश्रयपात' । तथा च कथं स्वसाध्यसिद्धौ साधकतममिदम् । तद्भावना चैवम्—निश्चितस्वरूपत्वे निश्चितस्वरूपत्वं न वर्तते, आत्माश्रयपातात् यथा प्रमेयत्व-सत्त्वादिषु । जातिसम्बन्धबाधकाद्वा तथा अत्रापीति । अन्यच्च लोकेऽपि सुशिक्षितो विचक्षणः स्वस्कन्धाधिरोहणाय न चणः । नापि निशिततरधाराकरालकरवालं स्वं छेत्तुमाहितव्यापारमिति केनापि दृष्टमिष्टं वेति ।

अथैतद्दोषसरोषविषमविषधरविषावेगज्वालाविगलितप्रतिभाविभवैर्द्वितीयः पक्षः कक्षीकरिष्यते परोलक्षदक्षविख्याततार्किकचक्रचक्रवर्तिपर्षदि सहर्षम्, तदा तस्याऽपि प्रामाण्यं स्वतः परतो वेति विकल्पौ जन्मान्तरोपार्जितधर्माधर्माविवाऽव्याहतप्रसरौ भवत' पुरतोऽवतिष्ठेते । तत्र नाद्यः सद्योनिरवद्यविद्याविनोदाय, पूर्ववदात्माश्रयपातात् । भावना पूर्ववदिति । द्वितीयश्चेत् तदा तस्य प्रामाण्य स्वतः परतो वा ' । स्वतः प्रामाण्ये पूर्ववदात्माश्रयः । परतश्चेत् तदा भवन्त एव प्रष्टव्या'—तत्र परशब्देन किमाद्यस्तृतीयो वा ? इति विकल्पयुगल कुलाचलदन्तावलस्थूलदन्तमुशलयुगलमिवावतरति । तत्र न पौरस्त्यो वास्तवस्वस्तिमच्छ्रियं तन्तनीति भवता दुरुत्तरेतरेतराश्रयाजस्रविश्रामावासाश्रयात्, द्वयोरन्योन्यापेक्षणलक्षणत्वात् तस्य । तद्भावना चैवम्—स्वनिश्चितस्वरूपप्रामाण्यसिद्धौ परशब्दोपात्ताद्यस्य प्रामाण्यसिद्धिः, परशब्दसंगृहीताद्यस्य प्रामाण्यसिद्धौ द्वितीयस्य प्रामाण्यसिद्धिरिति । अथ तृतीयादिति विकल्पो विवादशब्दगोचरीचरीक्रो(क्रि)यते स्ववचश्चातुर्याहार्यमतिभिः, तदा तस्यापि स्वनिश्चायकप्रामाण्यं स्वतः परतो वा ? इति विकल्पद्वयं पूर्ववदुपढौकते । तत्र नाद्योऽनवद्यः सद्यस्कोत्तरचतुराणाम् । स्वतः प्रामाण्यसिद्धौ पूर्ववदात्माश्रयस्योद्भटत्वम् । अथ परत इति वावद्यते वावदूकैस्तदा पर इति पदेन किमाद्यो द्वितीयश्चतुर्थो वेति विकल्पत्रयी पवित्रत्रिनेत्रनेत्रत्रयीवात्र त्रौकते । तत्र प्रथमस्तथ्यपथ्यप्रीतिपात्रतयाऽतिथीक्रियते, तदा धाराकरालातिवक्रचक्रकातिपातपातितमस्तकः स्वसाध्यसिद्धिप्राणप्रियां प्रणयिनीं प्रीतिपात्रं कथं प्रापयिष्यति ? तस्य चेदं लक्षणमाचक्षते विचक्षणाः—पूर्वस्य पूर्वापेक्षितमध्यमापेक्षितोत्तरापेक्षितत्वं चक्रकमिति । तस्य चैवं भावना – पूर्वो निश्चितस्वरूपो विकल्पः स्वप्रामाण्यापादनाय द्वितीयं प्रमाणमपेक्षते, स्वयं प्रमाणीकरणे पूर्वोक्तदोषात्, द्वितीयोऽप्यप्रमाण' पूर्वस्य प्रामाण्यमापादयितु न शक्नोति, यथा स्वयं दरिद्रो न परम् ईश्वरीकर्तुम्, तेन द्वितीयः स्वप्रामाण्याय तृतीयमपेक्षते; सोऽप्यप्रामाण्यादन्यतः स्वप्रमाणीकरणायुक्तौ(क्तो)ऽप्रमाणीभूतमाद्यमपेक्षते, तथा पूर्ववत् सोऽपि द्वितीयम्, सोऽपि तत्कृते तृतीयम्, सोऽपि पूर्वोक्तयुक्त्या पूर्वमित्याद्यनुलोमापादनेन चक्रक-

मिति चक्रकाक्रान्तमौलि. कथं स्वसाध्यसाधक इति । यतः —

यश्चक्रकापातनिकृत्तमौलेः
समीहते साधनतोऽर्थसिद्धिम् ।
पद्माकरस्य प्रतिबोधमस्तात्
स पद्मबन्धोरपि वाञ्छति स्म ॥

अथामुत्रामात्रपवित्रपुरुपार्थत्रयस्य सार्थकप्रामाणा(ण्य)समर्थनासमर्थचतुर्थपुरुषार्थ इव चतुर्थः पक्षः तृतीयविकल्पस्य प्रामाण्यसमर्थनार्थमेव समर्थयिष्यते, तदा दुस्थाऽनवस्थारूपकृत्योत्थानं स्ववधाय प्रस्थापितं विबुधधोरणीधुराधरणधौरेयैः । तस्याश्चेदं लक्षणम्- पूर्वस्योत्तरोत्तरापेक्षेति । सा चैवमावेद्यते—पौरस्त्यो निश्चितस्वरूपः स्वप्रामाण्यापादनाय द्वितीयम्, सोऽपि तथैव तृतीयम्, सोऽपि चतुर्थम् एवमुत्तरोत्तरप्रसृत्वरपर' सहस्रानल्पप्रमाणविकल्पकल्पनैरप्यभृतोदरविवरां मूलक्षयवद्रकक्षां तामपाकर्तुं कथमुपक्रम्यते । यदाहु' श्रीआनन्दानुभवाचार्याः यथा "मूलक्षयकरीमाहुरनवस्था हि दूषणम्" इति । ततः कथं साध्यसिद्धि' ? । यतः —

दुस्थाऽनवस्थोत्थितदौस्थ्यदुस्थं
प्रस्थापयेत् साधनमर्थसिद्ध्यै ।
वाञ्छत्यसावस्तमति' स्ववन्ध्या-
सीमन्तिनीतस्तनयप्रसूतिम् ॥

एवं च निश्चितस्वरूपत्वोपपत्तियुक्तौ आत्माश्रय-इतरेतराश्रय-चक्रका-ऽनवस्थाद्यनेकविशेषदोषजालव्याकुलत्वमाकर्ण्य कर्णाम्रेडनपीडितै' सकर्णैः पुनरपि तत्सिद्धिविधौ अनिश्चितरूपो द्वितीयपक्ष. कक्षीक्रियते । सोऽपि नाद्वैतवाद इव धन्यमान्यसौजन्यामन्दमाकन्दकन्दकन्दलनायाम्बुदवृन्दायते । यतस्तत्राप्यस्माभि प्रतिविधीयते – यथा तत्र पवित्रानुमानेऽसिद्धविरुद्धानैकान्तिकरूपास्त्रयोऽपि हेत्वाभासहर्यक्षा भवदुपन्यस्तहेतुहरिणपोतं त्रासयन्तः कथमपाकरिष्यन्ते सूक्ष्माक्षूणम(माक्षुण्णम)नीषाविशेषविषमविशिखविक्षेपाक्षेपवद्धकक्षैरपि । तथाहि—हेतोस्तावत् पक्षधर्मत्व-सपक्षसत्त्व-विपक्षव्यावृत्तिरूपाणि त्रीणि रूपाणि निरूप्यन्तेऽभिरूपप्रधानै' । तत्र भवन्निरूपितहेतोरनिश्चितपक्षधर्मत्वेन तल्लक्षणाभावादुद्धतासिद्धताप्रोद्धतपामरीपरीरम्भारम्भसम्भवत्कलङ्कपङ्कः कथमपाकरिष्यते हेतुश्रोत्रियस्याशक्यप्रतिक्रियैः । महत् कौतुकमिदं यदेवंविधादपि हेतोः साध्यसिद्धिः समीह्यते । यदुक्तं स्याद्वादरत्नाकरे—

किमपि कौतुकमेकमहो जनाः
शृणुत यूयममुष्य मनस्विनः ।
कवलितोत्कटहालहलोऽपि य-
न्नवसुधारसमुद्गिरतीह यत् ॥
अगतिकगतिनीत्या यस्तु हेतोरसिद्धा-
दपि वदति विशुद्धामत्र साध्यस्य सिद्धिम् ।
स खलु गलितबुद्धिर्वन्ध्यसीमन्तिनीतः
स्पृहयति भुवनानां भूषणं पुत्ररत्नम् ॥

यथा कश्चित् प्रमाणयति—धूमवत्त्व-बाष्प-मशक-कलिकाविवेकानिश्चये 'वह्निमानयं प्रदेशः धूमवत्त्वात्' इत्यादौ यथा निश्चयाभावादनिश्चितापरपर्यायः सन्दिग्धासिद्धो हेत्वाभासो न साध्यसाधकस्तथाऽत्रापीति । व्याप्यत्वासिद्धत्वं त्वग्रे दर्शयिष्यते । अन्यच्च, हेतोरनिश्चितरूपत्वाद् विपक्षवृत्तिभावात् तदाहृतो दुर्धरोद्धतविरुद्धतादोषकेसरि-किसो(शो)रापातगलितगतिर्भवदुपन्यस्तप्रशस्तहेतुहस्तिनीपतिः स्वसाध्यसिद्धिप्राणप्रिय-प्रणयिनीप्रथीयस्तरप्रीतिपथावितथातिथ्याभ्यर्थनासमर्थनासामर्थ्ये कथं समर्थयिष्यति । यथा 'पृथिवी नित्या कार्यत्वात्, घटवत्' इति । अत्र कृतकत्व तु कार्यरूपद्व्यणुकादि-पृथिव्यां वर्तते, न परमाण्वादौ, विपक्षे तु घटादौ सर्वत्राप्यस्ति । तथेहाप्यनिश्चित-रूपहेतोः पक्षवृत्तित्वं विपक्षवृत्तित्वं च वर्तते । तथा च कथ नाम स्वसाध्यसाधकत्व-मिति । यथा—

हेतोर्विरुद्धादपि साध्यसिद्धिं यश्चेक्षते शिक्षितमानशिक्षः ।
क्रोधप्रबन्धोद्धतपन्नगेन्द्रात् समीहते सौधरसस्य वृष्टिम् ॥

तथा खण्डनेऽप्युक्तं श्रीहर्षमिश्रैः—

यावच्चाव्यतिरेकित्वं शतांशेनापि शङ्कयते ।
विपक्षस्य कुतस्तावद्धेतोर्गमनिकाबलम् ॥ इति ।

ततो यत्किञ्चिदेतदिति । तथैवानिश्चितरूपपक्षाङ्गीकारपक्षेऽप्यकान्तानैकान्तिकता-कामुककुट्टिनीकटुकटाक्षविक्षेपाक्षेपविक्षेपित स्वबुद्धिविधिविधीयमानयोगाभ्यासो भव-दुपन्यस्तहेत्वाभासो मुमुक्षुमुख्य इव मनीषितस्वसाध्यसिद्धिसौधमध्यं कथमध्यारोहति । हेतुलक्षणप्रतियोग्यनिश्चितस्वरूपत्वात् तस्य पक्षे, विपक्षे पूर्वदर्शितयुक्त्या सन्दिग्धवृ-त्तित्वम्, सपक्षे तथारूपानिर्णीतवृत्तित्वं च । तथा पक्षत्रयवृत्त्यनैकान्तिकलक्षणत्वाच्च ।

तद्भावना चैवम् — यथा प्रपञ्चो मिथ्या, प्रतीयमानत्वात्, शुक्तिकाशकले कलधौतज्ञानवदिति। अत्र पक्ष-सपक्षयोर्मिथ्यात्वानिश्चितवृत्तित्वं विपक्षे ब्रह्मणि निर्णीतवृत्तित्वं च। तथाऽत्रापि। तथा च कथं स्वसाध्यसाधकत्वम्? यदवादि—

हेतोरनैकान्तिकतोऽपि कान्तां
स्वसाध्यसिद्धिश्रियमीहते यः।
पञ्चत्वप्रासादपि केकिपुत्रा-
त्केकायित कामयतेऽनभिज्ञः॥

तथा सव्यभिचार्यप्यसावित्युच्यते इति स्थितम्। अपरं च, अथावितथतथाविधप्रज्ञाप्रकर्षप्राप्तप्रमाणप्रयोगप्रबोधप्रथितप्रतिज्ञोपन्यासविन्याससमर्थनासामर्थ्याभावादप्रयोजकोऽप्ययं हेतुः। कथमस्य निश्चितपञ्चरूपोपपन्नप्रतिष्ठाप्रतिष्ठितस्य हेतुनरेश्वरस्याप्रयोजकत्वम्? महाव्याधीभूतोद्धतोपाधिसद्भावात्। भवतु पच्यन्तां त्वदीया अपि मण्डकाः। परम्, अत्र कस्तावदुपाधिः संनिधीयते धीधनप्रधानैः। पक्षेतरत्वमिति चेद् अहो तदक्षर्णं(क्षुण्ण)लक्षणानपेक्ष्यं तव वैदुष्यम्, समव्याप्तेरभावात्। यथा, 'पर्वतोऽयं वह्निमान् धूमवत्त्वात्' इत्यादौ पक्षेतरोपाधेः समव्याप्त्यभावः, यथा 'यो यो वह्निमान् स स पक्षेतरः' इत्यस्ति, परम् 'यो यः पक्षेतरः स स वह्निमान्' इति नास्ति। पक्षेणैव व्यभिचारात्। तेन पक्षेतरोपाधेर्न दूषणत्वम्। मैवमवादिषुस्तत्रभवन्तो भवन्तः। तथाहि—'अदृष्टं कस्यचित् प्रत्यक्षं प्रमेयत्वात्, करतलामलकवत्' इति। अत्र पक्षेतरापरपर्यायमस्मत्प्रत्यक्षत्वमुपाधिः। तस्य च साध्यसमव्याप्तिसद्भावात्। तद्यथा 'यत् कस्यचित् प्रत्यक्षं तदस्मदादिप्रत्यक्षम्, यथा घटः'। यदस्मदादिप्रत्यक्षं तत् कस्यचित् प्रत्यक्ष यथा तदेव' इति समव्याप्तेरपि सद्भावात्। एवमनेकेष्वपि समव्याप्तेरप्युपजीवकत्वेन पक्षेतरस्योपाधित्वं न निराकार्यम्। एतच्चाग्रत उपाधिखण्डनाधिकारे विस्तरतो दर्शयिष्यते। अन्यच्चापरोऽप्युपाधिः सुविधनिधिरिवोपढौकते, यथा पक्षावृत्ति-साध्याविनाभाविसपक्षासाधारणरूप इति। अत्र सकलमपि लक्षणं भावनीयम्। एतद्व्याख्यानभावना प्रत्युपाधिप्रदीपाधिकारे ज्ञेया। एवं च सोपाधिकत्वे हेतुः कथं नाम स्वसाध्यसाधकः। यदुक्तमुदयनाचार्यैः—

अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः।
तैर्दृष्टैरपि नेष्टव्या व्यापकांशावधारणा॥
स्वसाध्यसंसिद्धिविधावुपाधिव्याधिप्रबन्धोद्धरमीहते यः।
हेतुं स वै वालकुवेलनालावलम्बनादम्बुधिपारमिच्छेत्॥

५ टे० °क्षूण°।

एवं पूर्वोक्तयुक्त्या विचार्यमाणो युष्मन्निरूपितो हेतुर्न स्वसाध्यसिद्धौ साधीयस्त्वां दधाति । तथापि पुनरप्येकशः प्रकारान्तरेण विचार्यते । तथाहि—असौ हेतुस्तर्कवितर्कसम्पर्ककर्कशशेमुषीविशेषोन्मेषाभिलषितलक्षणलक्षित आहोस्वित् परोलक्षदक्षविक्षेपितलक्षणलक्षितः ? इति विकल्पयुगलं कुलाचलकुञ्जरस्थूलविमलदन्तयुगलमिव प्रतीतिपथातिथीभावं भजति। तत्र द्वितीयो नाद्वैतानन्दनिष्यन्दसम्पत्सम्पादकः । न हि कोऽपि प्रवोणप्रामाणिकः प्रामाणिकीभूय भूयः सङ्ख्यावत्पर्षदि निर्लक्षणं हेतुमाचष्टे, तस्य सर्वोपाख्याविरहितत्वेन साध्यसिद्धावनादरणीयत्वात् । अथ पौरस्त्यः प्रस्तूयते स्वस्तिवास्तवीभूतप्रशस्तमतिभिस्तदा प्रचण्डदोर्दण्डाखण्डपाण्डित्योड्डामरतामण्डलाखण्डलपराक्रमायमाणपण्डितप्रकाण्डचण्डिमोन्मुक्तातिवक्रचक्रकक्वत्तमुण्डः कथं स्वसाध्यसिद्धिप्राणप्रियाप्रणयिनीमनःप्रमोदसम्पत्सम्पादनाय सपनीपद्यते । तथाहि—हेतुः स्वात्मसिद्धिसौधमध्यमध्यारोहणाय लक्षणमपेक्षते, लक्षणमपि व्याप्तिप्राप्तिम्, व्याप्तिप्राप्तिरपि हेतुम्, हेतुरपि लक्षणम्, लक्षणमपि व्याप्तिप्राप्तिम्, व्याप्तिरपि हेतुमित्यावर्तनमिति कथ स्वसाध्यसाधकः । यतः—

यश्चक्रकापातनिकृत्तमौलेर्हेतोः स्वसाध्यस्य समृद्धिसिद्धिम् ।
विनैव रत्नत्रयमीहतेऽसौ दुरुत्तरानन्तभवाब्धिपारम् ॥

पूर्वोपाधेरनौपाधिकः सम्बन्धो व्याप्तिरव्यभिचरितसम्बन्धो वा व्याप्तिरिति लक्षणाया व्याप्तेरभावाच्चानैकान्तिको भवन् कथमप्यसौ हेतुः स्वसाध्यसाधकः । तथा प्रकरणसमोऽप्ययं हेतुः, साध्यविपरीतसाधकहेत्वन्तरसद्भावात् । तथाहि—इहेदं साधनं स्वसाध्यसिद्धये नोपन्यसनीयम्, स्वसाध्यसिद्धावसाधकतमत्वात् । यद् यत्र स्वसाध्यसाधनायासाधकतमं तत् तत्र नोपन्यसनीयम्, यथेह घटं प्रति घटः । न जायते चानेन साध्यसिद्धिः । तस्मान्नोपन्यसनीयमिति व्यापकविरुद्धोपलब्धिरिति । अपरमपि यथा पक्षः स्वस्वेतरवृत्तित्वानधिकरणास्ववृत्तिधर्माधिकरणम्, मेयत्वात्, घटवदिति ।१। अत्रान्यान्यपि प्रमाणानि मुग्धप्रामाणिकमेधाव्यामोहापनोदाय लिख्यन्ते । यथा—पक्षः साध्यनिष्ठात्यन्ताभावाधिकरणम्, मेयत्वात्, घटवदिति । २ । पक्षः साध्यधर्मातिरिक्तधर्माधिकरणम्, प्रतीयमानत्वान्निर्विवादपदवत् ।३। पक्षविपक्षधर्मनिष्ठात्यन्ताभावाधिकरणम्, प्रमेयत्वादविगीतपदवत् ।४। अयं पक्ष एतत्पक्षधर्मान्यधर्मवानसत्त्वात् ।५। पक्षोऽयं पक्षधर्मनिष्ठात्यन्ताभावाधिकरणम्, मेयत्वाद् उभयाविगीतपदवत् ।६। इत्यादीनि वक्रच्छायानुमानानि प्रतिपक्षोत्थापकानि परःशतानि परिस्फुरन्ति । ततः कथमिद साधनं युष्मदुपज्ञसाध्यसाधकमिति । यथा—

प्रत्यर्थिहेतोरपि यः स्वहेतोर्वावक्ति वै साध्यसमृद्धिसिद्धिम् ।
स्फुरत्स्फुलिङ्गात् स हुताशनादेः पानीयपानं कुरुते न कस्मात् ॥

इत्युपहसनीयम् । ननु विपक्षसपक्षादिपक्षीकृत्य प्रवर्तमानमहाविद्यातनुत्राणपरित्राणायमान-विस्मयस्मेरास्मदुपन्यासविन्यासावासविश्रान्तहेतुर्नरेश्वरस्य पुरतो वाचस्पतेरपि प्रवीण-वाणी कृपाणीप्रगुणीकृता सती कुण्ठताकार्पण्यायोत्कण्ठते । के एतेऽस[त्]कल्पा गजवि-कल्पकल्पा विकल्पा एवं चेत् तर्हि शक्रेणापि अप्रतिक्रियमाणपरित्राणायमानास्मद्विधीय-मानप्रत्यवस्थानविधेरध'स्थीस्थीयतां क्षणमेकं विलोक्यता तत्तनुत्राणपरित्राणताम् । नन्वहो वादिन् ! सावयवस्यास्यानुमानस्य विद्यात्वमपि नोपपत्तिपद्धतिमुपयाति । कुतस्त-न्नाम महाविद्यात्वम् । तथाहि—असिद्धत्वादिदोषविरहो हि महाविद्यात्वं शुभवता भवता भण्यते । तच्च प्रामाणिकचक्रशक्रामोघयुक्तिशक्तिप्रकोपपावकप्रथमाहुतीभूतम् । यतो व्याप्यत्वासिद्धत्वबाधितोऽय हेत्वाभासः । केवलान्वयित्वेन व्यतिरेकव्याप्तेरभावात् । तथाहि—साध्यं परमार्थतोऽत्रानित्यत्वमेव शब्दस्य । तथाहि—'अनित्यः शब्दः कृत-कत्वात्, घटवत्' इत्यत्राश्र(श्रा)वणत्वमुपाधिः । ततो 'यदनित्यं तदश्रावणम्' इति साध्यव्यापकश्चायमुपाधिरिति शब्दस्य विवादास्पदीभूतं साध्यत्वेनाभिप्रेतं शब्दनित्यत्वम्, ततस्तेनाव्यभिचारित्वादेव सोपाधिकत्वं सिद्धम् । मैव वादीः । यतोऽत्र शब्दस्यानित्यत्वं न साध्यम्, किन्तु शब्देतरानित्यनित्यवृत्तित्वानधिकरणानित्यवृत्तित्वम् । तत्र च नोपा-धिना व्याप्ति' । शब्दत्वेन व्यभिचारात् । ततः साध्यव्यापकत्वाभावान्नायमुपाधिरिति तन्मैवम् । प्रामाणिकप्रणीतप्रमाणमार्गातिक्रमणविपुलस्वकपोलकल्पितानल्पयत्तच्छन्दवि-कल्पशब्दनलम्बीकृतस्याप्यनुमानस्य शब्दानित्यत्व एव विश्रामात् । साध्यं च तदेव यद् विवादास्पदीभूतं सिसाधयिषितमस्ति प्रतिपक्षे मेयत्वेन । तच् तत्त्वतोऽनित्यत्व-मेवेति । यदुक्तमेतदनुमानोपाधिसंग्राहक पद्यं बृहन्महाविद्याविडम्बने—

यो भङ्गिस्थनिवृत्तिमत्त्वरहितो यद्वर्जिते मेयता
मेयत्वे श्रुतिगोचरत्वविरह' स स्यादुपाधिर्ध्रुव' ।
शब्दत्वादि निवर्त्यमस्ति न ततः पक्षेतरत्वभ्रम
सर्वत्रैवमुपाधिरप्रतिहतो नो चेन्न हेत्वन्तरे ॥

इति । ततो व्याप्यत्वासिद्धत्वेनाप्रयोजकत्वान्न साध्यसिद्धिः । यदुक्तम्—अन्ये परप्रयुक्ताना[मित्यादि ।] तथा विरुद्धोद्धतराक्षसीकुक्षिनिक्षिप्तोऽप्ययं हेत्वाभासः । यतो विरुद्धसाधनाद् विरुद्ध', तच्चात्रानित्यत्वं साध्यम्, तद्विपरीतं नित्यत्वम्, तदप्यनेनानुमा-नेन शब्दवैपरीत्येन साधयितुं शक्यत्वात् । तथाहि—घटः शब्देतरानित्यवृत्तित्वानधि-करणनित्यवृत्तिधर्मवान् इति । अन्यच्च प्रमेयत्वं भवतु, शब्देतरानित्यनित्यवृत्तित्वानधि-

करणानित्यवृत्तिधर्मत्वं मास्तु एवं परेण प्रसञ्जिते, प्रमाणानुग्राहकव्याघातबाधकतर्कस्य व्यभिचारपिशाचदुःसञ्चरत्वेनानुदयादनैकान्तिकश्च। तथा च कथं महाविद्यात्वम्।

अपरं च महाविद्यासाध्ये महाविद्यासाध्यं वर्तते न वा। वर्तते चेत् तदा सप्रश्रय आत्माश्रयपातः। न वर्तते चेत् तदा महाविद्यासाध्ये हेतोर्वर्तनात्, साध्ये साध्यस्याऽवर्तनात्, तस्यैव विपक्षत्वादनैकान्तिकश्चेति दोषत्रयी त्रिनेत्रनेत्रत्रयीवात्र त्रौकमाना कथं महाविद्यात्वं क्षमते इति चिन्तनीयं चतुरचेतोभिः।

अन्यच्च, अनित्ये पदार्थे साध्यमाने आत्मादिनित्यपदार्थस्य पक्षीकरणं न युक्तिमत्। यतः संदिग्धसाध्यवान् पक्ष इति पक्षलक्षणम्, तच्चात्मादौ नित्ये पदार्थे नास्ति। अनित्यत्वस्य शब्दे साध्यमानत्वेन शब्दस्यैव, संदिग्धसाध्यवत्त्वात्, आत्मनो नित्यत्वे नोभयो[1]ः, सिद्धस्य तथात्वाभावात्। तथात्वेऽपि तत्र हेतुवृत्त्यङ्गीकारेऽसिद्धत्वाद्युद्भावनमुक्तयुक्त्या केन निवार्यते। तस्मादात्मादयः पक्षत्वेनोपन्यस्यमाना अजागलस्तनकल्पनाऽसकृत्कल्पा एव प्रामाणिकमार्गाननुसरणात्। यथा साध्याभावमपि पक्षीकुरुषे तदपि न समीचीनम्। सर्वथाऽसतो निरूपाख्यस्य पक्षीकर्तुमशक्यत्वात्। असदपि चेत् पक्षीक्रियते तदा तुङ्गतुरङ्गशृङ्गगगनाम्भोरुहादयोऽपि पक्षीक्रियताम्। युक्तेः समानत्वात्। तुच्छे साध्याभावे साध्यसाधनेऽदरिद्रमेव विश्व स्यात्। इत्यादयो महाविद्याहेतुखण्डनप्रकाराः श्रीभुवनसुन्दरसूरिपादप्रणीतमहाविद्याविडम्बनादवसेयाः।

तथा प्रमेयत्व-सत्त्वरूपसाधनानां हेतुमल्लोललाङ्गूललम्बायितमहाविद्यानुमानानां वक्रच्छायानुमानानां चानिष्टव्याप्यप्रसञ्जनेन हेतोरनैकान्तिकत्वं भावनीयम्। तत्र विपक्षवृत्तित्वेन व्यापकारोपासम्भवात्, न प्रमाणानुग्राहकव्याघाततर्कसम्भव इति। अनुकूलतर्कसम्भवश्चैवं द्वयोर्विरुद्धधर्मयोरेकत्रसमुच्चये कीर्त्यमाने व्याघातः स्यात्, यथा 'पर्वतोऽयं वह्निमान् धूमत्वान्महानसवत्' इत्यादि वादिनाऽभिहिते परो निश्चितान्यथानुपपत्त्येकरूपं हेतुलक्षणं निराकर्तुं व्यापारोऽयं विधत्ते। यथा व्यतिरेकव्याप्तौ व्याप्यत्वेनो(ना)भिमतो वह्निमत्त्वाभावस्तत्र धूमत्वसद्भावारोपो यथा 'धूमवत्त्वं भवतु वह्निमत्त्वं मास्तु' इत्युक्ते प्रतिवादिना हेतोः साध्याभावत्वं सूचितं तथा चासिद्धत्वं हेतो.।

तन्निराकरणाय रङ्गप्रसङ्गव्यासङ्गाघसङ्घातविघातोद्भटप्रकटव्याघातनिर्घातदर्शनेन व्यापकारोपः क्रियते, यथा 'यद्यनग्निः स्यात् तर्हि निर्धूमः स्यात्' इति प्रसङ्गागतो व्यापकारोपः। भावना त्वेवम्—अस्ति च धूमस्तस्माद्वह्निमानिति व्याप्यारोपे व्यापकारोप इति लक्षणेन तर्केण प्रमाणानुग्राहकेण साध्याभाववत्त्वं हेतोः प्रसञ्जितं

१ पक्षीकरणमिति शेष.।

निराकृतम् । तथा च नानैकान्तिकत्वमिति । एव च प्रमेयत्वसत्त्वहेत्वोर्व्याप्यारोपे कृते व्यापकारोपाभावादनैकान्तिकत्वं समर्थनीयमिति ।

अन्यच्च, वक्रच्छायानुमानसाध्येषु साध्यं वर्तते न वा ? । वर्तते चेत् तर्हि व्याघातो, घटे घटवदिति । न वर्तते चेत् तर्हि पक्षस्य प्रत्यक्षबाधितत्वम् । तथा च कालात्ययापदिष्टत्वमजनिष्ट ।

अन्यच्च, साध्ये साध्याभावात् पक्षस्य विपक्षीभूतत्वेन हेतोस्तत्र वर्तनादनैकान्तिकादयो दोषा उद्भावनीया. । एवं च वक्रच्छायानुमानहेतवो निराकरणीयाः सहृदयैः । अत्र प्रकृतत्वान्मूलानुमानहेतुखण्डनकौतुकं दर्श्यते । यथा, अत्र प्रमाणेन पूर्वकोट्यनुपलब्धेरसिद्धः । यथा पूर्वकोटिशब्देनादिरुच्यते; यत् किल कार्यं घटादि, तस्यादि. प्रमाणेनोपलभ्यते न तु भू-भूधरादीनामादिरुपलभ्यते; अतस्तेषु कार्यत्वानुलब्धेरसिद्धत्वम् ।

अन्यच्च—प्रसङ्गप्रसञ्जितव्याघाताभावविहितव्याप्यत्वासिद्धत्वं दर्श्यते । यथा अन्वयाभिमतव्यापकभावे व्याप्यारोपे परेण प्रसञ्जिते इदानीमप्युत्पद्यमानतरुतृण—विद्युदभ्रादिभिर्व्यभिचारात् प्रमाणानुग्राहकतर्कासम्भवस्ततश्च व्याघातस्योद्भटत्वाभावेन साध्याभावे व्याप्यारोपस्य सत्यत्वापादनतोऽपि व्याप्यत्वासिद्धत्वं हेतोः, तथा बुद्धिमत्पूर्वकत्वं साध्यो धर्मः, तद्विशेषोऽशरीरवत्त्वं वक्तुरभिप्रेतम्, तद्विरुद्धं सशरीरत्वं व्याप्तिबलेन साध्यते, अत. कारणादशरीरपूर्वकत्वानुमाने कार्यत्वादित्ययं हेतुरभिमतविशेषव्यावृत्त्या स्वपक्षस्यैव विपक्षभवनात् तत्र च वर्तनाद् विरुद्ध । यद्वा प्रसङ्गेन साध्याभावे साधनस्य सद्भावव्यञ्जनेनापि विरुद्धत्वं साधनीयमिति ।

अन्यच्च, 'यद् यत् कार्यं तत् तत् बुद्धिमत्कर्तृकम्' इत्यत्र पूर्वदर्शितव्यभिचारेणानैकान्तिकत्वम् ।

तथा व्याप्तिग्राहकेण घटादौ शरीरिण एव कर्तुर्दर्शनात्, प्रमाणबाधितेऽशरीरकर्तृकत्वलक्षणेऽर्थे प्रवर्तमानो हेतु. कालात्ययापदिष्ट ।

तथान्वयबलेन दृष्टान्तदृष्टकर्तृसदृशः कर्ता सिद्ध्यति । नात्र तथा, तेन दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यम् ।

तथाऽप्रयोजकश्चायं हेतु. सशरीरजन्यत्वोपाधेः । तद्भावना चेहैवोपदर्श्यमानोपाधिविवेकाद ज्ञेया । यत्रोपाधिस्तत्रासिद्धविरुद्धानैकान्तिकसत्प्रतिपक्षादिदोषभावनाप्रकार प्रत्युपाधिप्रान्ते दर्शितस्ततो ज्ञेय । प्रकरणसमदर्शनार्थं तद्व्यतिरेको

दर्श्यते, यथा 'यत् सशरीरजन्यं न भवति तद् बुद्धिमत्कर्तृकमपि न भवति यथा व्योम' । एतस्य प्रतिपक्षानुमानं यथा 'भू-भूधरादिकं बुद्धिमत्कर्तृकं न भवति, सशरीराजन्यत्वात्, व्योमादिवत्' इति प्रकरणसमत्वम् ॥

व्याघातश्च प्राग्दर्शितः । अथेतरेतराश्रयो दर्श्यते, यथा तस्य माहात्म्यविशेषाददृश्यशरीरत्वे इतरेतराश्रयः, पिशाचादिवच्चादृश्यशरीरत्वेन तु संशयः, एवं च मूलानुमानदोषभावना स्वयमेव कार्या । प्रकृतत्वादेवैवं मनाग् दर्शितं ज्ञेयमिति स्थितम् ।

इति वादिविजयनाम्नि प्रकरणे त्रिविधहेतुखण्डनाधिकारः प्रथमः ।

*

* *

## २. उपाधिविवेकः

ननु हेतुखण्डनप्रथमाधिकारे सोपाधित्वेन हेतोरप्रयोजकत्वमवादि वादिवृन्दारकपुरन्दरैः । तत्रेदं परीपृच्छ्यते । उपाधेः किं रूपम्, किं च तस्य लक्षणमिति ? प्रत्याहतः प्रतिवाद्याह । "अन्यत्रगतो धर्मोऽन्यत्रोपचर्यमाण उपाधिरभिधीयते । यथा जपाकुसुमसंसर्गादारुण्यशून्ये स्फटिकोपलेऽरुणत्वं प्रतीयते तथोपाधौ वर्तमानं व्याप्यत्वं व्याप्यत्वाभाववति हेतौ प्रतीयते । इति व्याप्तिदूरीकरणेनोपाधेर्दूषणत्वम् । तस्योपाधेरिदं लक्षणम्—'साधनाव्यापकत्वे सति साध्यसमव्याप्तिरुपाधिः' । सुखावबोधार्थमिदं लक्षणं व्यवच्छिद्यते । उपाधिशब्देन लक्ष्यनिर्देशः । इतरेण च लक्षणनिर्देशः ।

साधनाव्यापक उपाधिरित्युक्ते 'अनित्यः शब्दः कृतकत्वाद् घटवत्' इत्यत्रानुमाने 'यत्र यत्र कृतकं(तकत्वं) तत्र तत्र द्रव्यत्वं नास्ति गुणादौ व्यभिचारात्' इति साधनाव्यापकत्वेन द्रव्यत्वमुपाधिः स्यात् । तन्निरासार्थं साध्यव्याप्तिपदम् ।

साध्यव्याप्तिरित्युक्ते 'अनित्यः शब्दः कृतकत्वाद् घटवत्' इत्यत्रानुमाने 'यत्रानित्यत्वं तत्र प्रमेयत्वम्' इति व्याप्तिसम्भवेन प्रमेयत्वमुपाधिः स्यात् । तन्निरासार्थं साधनाव्यापकपदम् ।

साधनाव्यापकः साध्यव्यापक उपाधिरित्युक्ते 'अनित्यः शब्दः कृतकत्वात् घटवत्' इत्यत्रानुमाने 'यत्र यत्रानित्यत्वं तत्र तत्र शब्देतरत्वम्' इति साध्यव्याप्तिसम्भवेन 'यत्र कृतकत्वं तत्र शब्देतरत्वमिति नास्ति, पक्षेण व्यभिचारात्' इति साधनाव्यापकत्व-

सम्भवाच्च शब्देतरत्वमुपाधिः स्यात् । तन्निरासार्थं समपदम् । एवममुना प्रकारेण सर्वपदसार्थक्यं ज्ञातव्यम् ।

एवंविधस्योपाधेर्दृष्टान्तस्थलमाह । 'विमता हिंसा अधर्मसाधनं हिंसात्वाद् ब्राह्मणहिंसावत्' इत्यत्र निषिद्धत्वमुपाधिः । योजनाप्रकारश्चायम् । यत्र यत्राधर्मसाधनत्वं तत्र तत्र निषिद्धत्वं यथा व्यर्थहिंसायाम् । यत्र यत्र निषिद्धत्वं तत्र तत्राधर्मसाधनत्वम् यथा सुरापानम् । यत्र यत्र हिंसात्वं तत्र तत्र निषिद्धत्वमिति नियमो नास्ति, वेदविहितहिंसायां व्यभिचारात् । यदा समव्याप्तिरुपाधिरिति मन्यते तदोपाधेः साध्यं प्रति व्याप्यत्वं व्यापकत्वं च सम्भवति । यदुक्तम्—

व्याप्य-व्यापकभावो हि भावयोर्यादृगिष्यते ।
तयोरभावयोस्तस्माद् विपरीतः प्रतीयते ॥

व्याख्या — अन्वये साध्योपाध्योर्भावरूपयोर्व्याप्यव्यापकभावो यादृगिष्यते तयोः साध्योपाध्योरभावरूपयोस्तस्माद् व्याप्यव्यापकभावाद् व्याप्यव्यापकभावो विपरीतो ज्ञेयः । अन्वये साध्यं प्रत्युपाधेर्व्यापकत्वात् । साध्यस्य व्याप्यत्वादिति तत्त्वम् । तदुक्तम् —

यो यस्य देशकालाभ्यां समो न्यूनोऽपि वा भवेत् ।
स व्याप्यो व्यापकस्तु स्यात् समो वाप्यधिकोपि वा ॥ [श्लो० वा० अनुमान ५]

श्लोकार्थः—यस्य येन साकं देशतः कालतो वा न्यूनवृत्तित्वं तस्य व्याप्यसञ्ज्ञैव, अधिकवृत्ति(त्ते)स्तु व्यापकसञ्ज्ञैव, समवृत्तेस्तु व्याप्यसंज्ञा व्यापकसंज्ञा वेति । तत्र—

व्याप्यं तु गमक प्रोक्तं व्यापक गम्यमुच्यते ।
विपरीते प्रतीयेते त एव तदभावयोः ॥

व्याप्यं साधनं गमकम्, व्यापकं साध्यं गम्यम्, गमयति ज्ञापयतीति व्य(व्यु)त्पत्त्या गमकं साधनं हेतुर्वेति भण्यते, गम्यते ज्ञाप्यते इति व्युत्पत्त्या गम्यं साध्यमुच्यते, व्यतिरेकव्याप्तौ च गम्यगमकभावो विपरीत इति व्यतिरेके साध्यं हेतुरूपं हेतुः साध्यरूप इत्यर्थः । अयं तावदुपाधिरन्वयव्यतिरेकिण्येव, न केवलान्वयिनि नापि केवलव्यतिरेकिणि । तदुक्तमुदयनाचार्यैः—

एकसाध्याविनाभावे मिथः सम्बन्धशून्ययोः ।
साध्याभावाविनाभावी स उपाधिर्यदत्ययः ॥

अस्यार्थः । एकेन साध्येन वेदविहिति(त)हिंसादिलक्षणेन(णे) पक्षेऽधर्मत्वरूपेण सहोभयोर्हेतूपाधिभूतयोरविनाभावे साहचा(च)र्यभावे सति मिथः परस्परं निषिद्धत्व-हिंसात्वयोः सम्बन्धेन व्याप्यव्यापकभावलक्षणेन रहितयोर्द्वयोर्धर्मयोर्मध्ये यस्य निषिद्ध-त्वलक्षणस्यात्ययोऽभावः साध्यस्याधर्मत्वस्याभावेनाविनाभावी भवति, स तत्राधर्म-त्वलक्षणे साध्ये निषिद्धत्वलक्षण उपाधिरिति तत्त्वम् । एतावता व्यतिरेकव्याप्तिं विना नोपाधेर्गमकत्वम् ।

यद्वा स उपाधिरुच्यते । स कः ? यस्योपाधेरत्ययोऽभावः साध्याभावेन सहाविनाभावी । कोऽर्थः ? यत्रोपाध्यभावस्तत्र साध्याभावः । एतावतोपाधिर्व्यावर्त-मानः साध्यमादाय व्यावर्त[त] इत्यायातम् । यथा यन्निषिद्धं न भवति तदधर्म-साधनमपि न भवति, यथा देवपूजादि । क सति ? एकसाध्येति । ऐकेन साध्येन विमतहिंसायामधर्मसाधनत्वलक्षणेन सहोभयोर्हिंसात्वहेतु-निषिद्धत्वोपाध्योरविनाभावे सति, यथा 'यत्र यत्राधर्मसाधनत्वं तत्र तत्र निषिद्धत्वं यथा व्यर्थहिंसायाम्' 'यत्र यत्र निषिद्धत्वं तत्र तत्राधर्मसाधनत्वं, यथा सुरापानम्' तथा हेतुनाविना-भावित्वम्, यथा 'यत्र यत्र हिंसात्वं तत्र तत्राधर्मसाधनत्वं यथा ब्राह्मणहिंसायाम्' । एवं सति किं रूपयोर्हेतूपाध्योः ? मिथः परस्परं व्याप्यव्यापकभावस्तेन रहितयोः । यथा यत्र यत्र हिंसात्वं तत्र तत्र निषिद्धत्वमिति नास्ति, वेदोक्तहिंसया व्यभिचारादिति । अयं तावदुपाधिर्नान्वयिनि । साध्याभावाविनाभावीत्यंशस्यासम्भवात् । नापि व्यति-रेकिणि । साध्यव्यापक इत्यंशस्यासम्भवात् । पक्षे साध्यव्यापकत्वे सिद्धसाधनता-प्रसङ्गः । अतोऽयमुपाधिरन्वयव्यतिरेकिण्येव सम्भवति । सोपाधित्वेन हेतोरप्रयोज-कत्वं वदन्ति । तदाह—

समासमाविनाभावावेकत्र स्तौ यदा तदा ।
समेन यदि नो व्याप्तस्तयोर्हीनोऽप्रयोजकः ॥

अस्यायमर्थः । समश्चासमश्च समासमौ, समासमावविनाभावौ ययोस्तौ समासमाविनाभावौ । एकस्य समोऽविनाभावोऽन्यस्यासमः । साध्येनाधर्मत्वादिना समत्वं च 'यत्र यत्र साध्यमधर्मत्वादि तत्र तत्र निषिद्धत्वादि, यत्र यत्र निषिद्धत्वादि तत्र तत्राधर्मत्वादि' इति समाविनाभावं निषिद्धत्वादि । असमत्वं च 'यत्र हिंसादित्वादि तत्राधर्मसाधनत्वादि, यत्राधर्मसाधनत्वादि न तत्र नियमेन हिंसात्वादि' । हिंसात्वा-दिकमन्तरेणापि सुरापानादावधर्मस्य दर्शनात् । अविनाभावश्च प्रमीयमाणव्यभिचारा-भावः । न हि हिंसात्वमविनाभूतमधर्मत्वेन, अनौपाधिकसम्बन्धस्याविनाभावस्य हिंसा-त्वहेतावभावान्निषिद्धत्वस्यैवोपाधित्वात् । व्यभिचाराज्ञानं च नास्ति, उपाधिदर्शनेन

व्यभिचारशङ्काया जातत्वात्। शङ्का च संशयः। स चाज्ञानमेवेति। तौ समासमावविनाभावौ यदैकत्र स्तः भवतः इति यावत्। एकत्रेति दृष्टान्ते परिदृश्यमानाधर्मसाधनरूपादौ, तयोर्मध्ये हीनोऽसमाविनाभावो हिंसात्वादिरप्रयोजको न साध्यं साधयतीत्यर्थः। असमाविनाभाव इति येन विनापि साध्यमधर्मत्वाद्यवतिष्ठते। अस्ति च हिंसात्वं विनापि सुरापानादावधर्मत्वादि। ततोऽसमाविनाभावी अप्रयोजकः। अन्यच्च, उपाधिना व्यभिचारोन्नायकत्वदर्शनतोऽप्रयोजकत्वं समर्थ्यते तथाहि—उपाधिरेव साध्यव्यापकीभूतः पक्षाद् व्यावर्त्यमानः पक्षात् साध्यं व्यावर्तयति। ततश्च पक्षे एव साध्यात्यन्ताभाव इति हेतोर्वृत्ते(त्ति)व्यभिचारोन्नायकत्वमिति। यदुक्तम्—

व्यभिचारोन्नयं कुर्वन्नुपाधिर्याति दोषताम्।
एतदेव च सर्वेषामुपाधीनां परायणम्।

यस्य पक्षावृत्तेर्भावाभावौ साध्यभावाभावौ प्रति व्याप्यौ स उपाधिरित्यादीन्यपि लक्षणान्यत्रैवान्तर्भावनीयानि समानार्थत्वादिति।

इति वादिविजयनाम्नि प्रकरणे त्रिविधहेतुखण्डने उपाधिविवेको नाम द्वितीयोऽधिकारः।

*

*   *

## ३ उपाधिप्रकाशः

अथ सपक्षोदारकन्दरोदरसञ्चरत्सहचारिणीविलासलीलालसा(लीलासा)दितप्रमीलामीलितलोचनकमलस्य समर्थप्रत्यर्थिहेतुगर्जद्गजघटारवश्रवणप्रगुणीभवत्कोपप्रकम्पप्रोच्छलदतुच्छहनूमल्लोललाङ्गूलास्फोटप्रकटितोत्कटभूमण्डलाकम्पस्य स उपाधिपञ्चाननस्य तत्प्रबोधाक्षेपकाक्षूण(ण्ण)लक्षणस्तत्रातोद्यं वाद्यते। तथाहि—साध्याविनाभावे सपक्षासाधारणधर्मवानुपाधिरभिधीयताम्।

सपक्षधर्म उपाधिरित्युक्ते हेतोरेव सपक्षधर्मत्वात् तद्धर्मेणैव सिद्धसाध्यता स्यात्। ब्राह्मणहिंसारूपसपक्षे हिंसारूपधर्मसम्भवात्। तथा चातिप्रसङ्गः। तन्निवृत्त्यर्थं सपक्षासाधारणेति पदम्। सपक्षसाधारणधर्माः प्रमेयत्वसत्त्वादयस्तेषामप्युपाधित्वम्। तन्निवृत्त्यर्थमसाधरणेति कृतम्। सपक्षासाधारणधर्म उपाधिरित्युक्ते प्रमेयत्वसत्त्वादिसाधरणधर्माणां निवृत्त्या पक्षावृत्तीति जातम्। तथापि ब्राह्मणहिंसारूपसपक्षधर्माः गौरत्व-श्यामत्व-विद्वत्त्व-वक्तृत्व-प्रलम्बत्व-ह्रस्वत्वाशूद्रभोजित्वादयोऽनेकधर्मास्तेषामप्युपाधित्वप्रसङ्गः। तथा च साधनाव्यापकः साध्यसमव्याप्तिक उपाधिरित्युपाधिलक्षणहानिः। तद्व्यवच्छेदाय साध्याविनाभावे सति इत्युक्तम्। कोऽर्थः? यो धर्मः सन्दिग्धसाध्यवति पक्षे न वर्तते, साध्येन सह प्रमीयमाण-

व्यभिचाराभावेन साध्यधर्माविनाभावी भवति, स उपाधिः, यथा यत्र साध्यं तत्रोपाधिः, यत्रोपाधिस्तत्र साध्यम् । एतावतोपाधिव्यावृत्तौ साध्यधर्मस्य व्यावृत्तिर्भवति । हेतुस्तु तत्र पक्ष एव तिष्ठतीति मिथः सम्बन्धशून्यत्वं सिद्धम् । तथा च सर्वपदसार्थक्यम् ।

एवंविधं धर्मं दृष्टान्तस्थले भावयति । यथा 'वेदविहिता हिंसा अधर्मसाधनं हिंसात्वात् , ब्राह्मणहिंसावत्' इत्यत्र ब्राह्मणहिंसालक्षणे सपक्षे उपाधिधर्मो विचार्यते । तथाहि—अन्वयव्यतिरेकिव्याप्यव्यापकरूपेणाधर्मसाधनरूपसाध्येन सहाविनाभावी विमतहिंसारूपपक्ष-देवपूजनरूपविपक्षाभ्यां व्यावृत्तः केवलब्राह्मणहिंसारूपसपक्षे निषिद्धत्वरूपधर्म एव विचार्यमाण उपपत्तिपद्धतिमुपैत्ति । तेनात्र निषिद्धत्वमेवोपाधिः । उपाधियोजनाप्रकारश्च पूर्वोक्तयुक्त्या चिन्त्यः । एवं साध्याविनाभावी पक्षविपक्षावृत्तिधर्मः सपक्षे सशोध्यासाधारणधर्म उपाधित्वेनोद्भाव्यः ।

यत्रोपाधिस्तत्रासिद्धविरुद्धानैकान्तिकसत्प्रतिपक्षादयो दोषा सम्भवन्तीति उपाधेर्दूषणत्वम् । तच्च दर्श्यते । यथानुमानेऽन्वयव्याप्तौ यत्र व्याप्यं तत्र व्यापकम् । व्यतिरेके व्याप्यीभूतव्यापकनिवृत्तौ व्यापकीभूतव्याप्यनिवृत्तिरिति प्रामाणिकसमयः । तत्रान्वये तथात्वाभावेऽनैकान्तिकत्वं यथा प्रतीयमानत्वेन प्रपञ्चमिथ्यात्वसाधने परब्रह्मणा व्यभिचारात् । व्यतिरेके तु व्याप्यत्वासिद्धत्वं यथा धूमध्वजाभावे धूमवत्त्वमिति । तथैवं सोपाधिकानुमानेऽपि । तत्प्राथमिकप्रामाणिकमतिव्युत्पत्त्यर्थं विस्तरतो दर्श्यते । हिंसायां विमतहिंसाऽधर्मत्वसाध्ये निषिद्धत्वोपाधिर्यथा यत्र यत्र हिंसात्वं तत्र तत्र निषिद्धत्वमिति नास्ति । पक्षेणैव व्यभिचारादनैकान्तिकत्वम् । तद्व्यतिरेकव्याप्तौ साध्यमादाय व्यावर्तमानोपाधौ साध्येन सह हिंसालक्षणसाधनस्याव्यावृत्तत्वाद् व्याप्यत्वासिद्धत्वं निश्चितान्यथानुपपत्तिलक्षणाभावात् । तथा तथैव साध्यमादाय व्यावर्तमानोपाधौ साध्यात्यन्ताभावात् पक्षस्यैव विपक्षत्वं जातम् । हेतोस्तथैव तत्र वर्तमानाद् विरुद्धत्वम् । यथा वेदविहिता हिंसाऽधर्मसाधन हिंसात्वादिति न केनापि दृष्टमिष्टं वा । एवं सपक्षेऽपि सत्त्वात् तथानैकान्तिकत्वमपि, ब्राह्मणहिंसादावपि वर्तनादिति । एवमेवोपाधिना प्रतिपन्थिप्रमाणाविर्भावनेन सत्प्रतिपक्षत्वम् । एवं वाधितविषयत्वाद्यपि समर्थनीयमिति स्थितम् ।

इत्युपाधिप्रकाशो वादिविजयनाम्नि त्रिविधहेतुखण्डने
तृतीयोऽधिकारः ।

*

*   *

## ४ प्रत्युपाधिप्रदीपः

श्री जिनं हर्षतो नत्वा वीरं विश्वातिशायिनम् ॥
प्रत्युपाधिप्रदीपाय ताण्डवं दर्श्यते मया ॥

ननु साधनाव्यापकत्वे सति साध्यसमव्यापक उपाधिरिति । लक्षणाभेदे सति उपाधिप्रत्युपाध्योर्भेदेनोपन्यासविन्यासः कथं प्रमाणकोटिमाटीकते ? उच्यते—स्वभावभेदात्, यथा लोके एकोदरसमुत्पन्नयोः पुत्रयोरेकबीजित्वेऽपि स्वभावभेदाद् विरुद्धार्थक्रियाकारिणोर्विरोधत्वेन भिन्नत्वं दृश्यते तथात्रापीति । यद्वा 'अनौपाधिकः सम्बन्धो व्याप्तिः', 'अव्यभिचरितसम्बन्धो व्याप्तिः' एवंविधलक्षणाभेदे सत्यप्यर्थक्रियाभेदादन्वयव्यतिरेकाभ्यां व्याप्तिद्वैविध्यमास्ते तथात्रापीति इति चेन्मैवम् । यथा तत्रापि परस्परव्यावर्तकक्रियाकारित्वेन तद्वाचकलक्षणेऽपि भिन्ने युक्तियुक्ते स्तस्तथात्राप्युपाधिप्रत्युपाधिविरोधिस्वभावज्ञापकलक्षणं विना लक्ष्यभेदः कथं भवतीति चिन्त्यमिति चेत् तर्हि तत्रेदं विरोधिस्वभाववाचकं लक्षणं यथा उपाध्याहतानुमानानुग्राहकत्वं प्रत्युपाधिरिति । अनुग्राहकः प्रत्युपाधिरित्युक्ते साकाङ्क्षता स्यात् । तथा वचसो वैयर्थ्यम् । तन्निवृत्त्यर्थमनुमानानुग्राहक इत्युक्तम् । अनुमानानुग्राहकः प्रत्युपाधिरित्युक्ते तर्केण सिद्धसाध्यता स्यात् । तस्यापि प्रसङ्गाहतानुमानस्य अनुग्राहकलक्षणत्वात् । तद्व्यावृत्त्यर्थमाहतेति कृतम् । तथापि साकाङ्क्षत्वम् । तथा च तस्य वैयर्थ्यम् । तन्निवृत्त्यर्थमुपाध्याहतेति पदम् । तथा च सर्वपदसार्थक्यमिति ।

एवंविधप्रत्युपाधेर्दृष्टान्तस्थलमाह । विमता हिंसा पक्षः । तत्र अधर्मसाधनत्वं साध्यम् । हिंसात्वादिति हेतुः । ब्राह्मणहिंसावदिति दृष्टान्तः । अत्र निषिद्धत्वमुपाधिः । योजनाप्रकारश्च पूर्ववदिति ।

उपाध्याहतत्व दर्श्यते । यथा सर्वत्र सोपाधिकानुमानेऽन्वयव्याप्तौ दृष्टान्तप्रभवेनोपाधिना साध्यस्य समाविनाभावित्वम् । हेतुना सहासमाविनाभावित्वविभावनेनावेदितमप्रयोजकत्वं साधनस्य । तथा च व्याप्यत्वासिद्धत्वमुद्भाव्यते । व्यतिरेकव्याप्तौ पक्षाद् व्याप्यीभूताधर्मसाधनत्वरूपसाध्यमादाय स्वय व्यापकीभूय व्यावर्तमानेनोपाधिना साध्यात्यन्ताभाववति विपक्षे साधनवृत्तित्वापादनेनानैकान्तिकत्वमाविष्क्रियते । तथा च सिद्धमुपाध्याहतानुमानत्वमिति ।

यथा पक्षाद् व्यावर्तमानेनोपाधिना साध्यमादाय हेतोरप्रयोजकत्वं कृत्वा प्रमाणव्याहतत्वं व्यधायि तथैव तद्व्यतिरेकिप्रमाणसपक्षोद्भूतप्रत्युपाधिना तत्पक्षे पुनः प्रत्याहृत्य हेतोः साध्येन सहान्यथानुपपत्तित्वमाधायानुमानानुग्राहकत्वं क्रियते ।

तथा च पूर्वोपाधेरप्रयोजकत्वं जातम्। तदर्श्यते। तद्व्यतिरेक्यनुमानप्रकाशनपूर्वम्। तद्यथा—वेदविहिता हिंसा धर्मसाधनं भवति, अनिषिद्धत्वात्, ब्राह्मणभोजनादिवत्। अत्राहिंसकत्वं प्रत्युपाधिः। एतद्योजना सुखावबोधाय लिख्यते। यथा यत्र यत्र अनिषिद्धत्वं तत्र तत्र अहिंसकत्वमिति नास्ति, वेदविहितहिंसया व्यभिचारात्। यत्र यत्र धर्मसाधनत्वं भवति तत्र तत्र अहिंसकत्वम्, यथा ब्राह्म[ण]भोजनादौ। यत्र यत्र अहिंसकत्वं तत्र तत्र धर्मसाधनत्वं भवति, यथा श्रुतपाठादौ। व्यतिरेकव्याप्तिस्त्वयम्—यत्र अहिसकत्वं न भवति तत्र धर्मसाधनत्वमपि न भवति, यथा व्यर्थहिंसादौ। अत्राहिंसकत्व प्रत्युपाधिर्व्यावर्तमानो वेदविहितहिंसायां धर्मसाधनत्वं व्यावर्तयति। तथा च सिद्धं पक्षे साध्यापादनहेतुसाध्याविनाभावित्वस्थापनेन प्रत्युपाधित्वम्।

तथा चैवं मूलानुमानमागतम्। यथा वेदविहितहिंसा अधर्मसाधनं हिंसात्वात् ब्राह्मणहिंसावदिति तथा चोपाध्याहतप्रमाणानुग्राहकलक्षणप्रत्युपाधिना एकलक्षणत्वेऽपि विरोधिधर्मित्वमुपाधिरिति। अथवा, कुमुदमेदमेदुरोदरप्रतिवाद्युद्भावितोपाधिमहाव्याधिव्याधूतस्तनंधयवादिन' पूर्वोक्तयुक्त्या निर्विलम्बप्रत्युपाध्याविर्भावनाशक्तौ प्रतिवादिदुर्मदापनोदाय निर्विलम्बमेव तदुद्भावनाप्रकारान्तरमाविर्भाव्यते। यथा प्रायो वादिर्विहितमूलानुमानसाधनवैपरीत्यं साधनाव्यापकसाध्यसमव्यापकलक्षणोपाधिना अन्वयव्यतिरेकाभ्यां व्यभिचारपरिहारपूर्वं मनसि विमृश्य प्रत्युपाधित्वेन भणनीयम्। प्रायो भणनादपरमपि तल्लक्षणं धर्ममुपाधिव्यतिरेकसपक्षे पूर्वोक्तोपपत्त्या सशोध्योपाधिलक्षणयोजनया मनसि सप्रधार्य प्रत्युपाधीकृत्योपाधिर्निराकार्यः।

एतच्च सोदाहरणं दर्श्यते। यथा कोऽपि जैमिनिमुनिविनेयः कथञ्चित् कयाचित् कर्मयोग्यतया सर्वपदार्थेष्वनित्यतां पश्यन् कश्चित् सुपर्वोपा[स]नासादितानन्योपमेयातिशयः सर्वसमर्थप्रत्यर्थिपार्थिवकदर्थनामन्मथप्रत्यर्थीयमानं कमपि महाराजानं प्रसृत्वररजनिकरदिनकरकरनिकरजित्वरासंख्यगुणज्योतिर्विसरपरास्तदुस्तमतमस्तोमभर यथार्थक्रियासमर्थार्थसार्थमिथ्यावासनावशपटुतरं वाचामगोचरं चिदानन्दाद्वैतरसास्वादसोदरमेकमेवाद्वितीयं ब्रह्म इति वदन् साक्षात् सकललोकालोकप्रकाशगोचरं महाज्योतिःप्रसरमदीदृशत्। तदनु तद[ति]रिक्तचराचरप्रपञ्चप्रसरपरमार्थसत्यता निराचिकीषुः(र्षुः) स्वाभिमतमतस्थापनायानुमानमिदमवादीत्—'विवादपदं मिथ्या दृश्यत्वात्। यद् यद(द्) दृश्यं तत् तन्मिथ्या, यथा शुक्तिशकले कलधौतम्। दृश्यते च विवादपदम्।

तस्मान्मिथ्या' इति । नैयायिकाद्यनुसारेण पञ्चावयवप्रयोगमाव(मारच)यति स्म । जैमु(मि)-निमुनिविनेयमीमांसकाद्यनुसारेण त्र्यवयवम्, बौद्धानुसारेण द्व्यवयवमिति विभागः। तत्र विवादपदग्रहणं प्रपञ्चैकदेशे सिद्धसाध्यताव्युदासार्थम् । लोके विवादपदस्यानेकरूपत्वं तथापि मिथ्येति साध्यग्रहणेन यत्र सत्यत्वमिथ्यात्वाभ्यां विवादः स एव धर्मो ज्ञेयः ।

अत्रेश्वरकृतस्य जगतो मिथ्यारूपत्वमाकर्ण्य सकर्णाकर्णनीयमनर्थक्रियाकारित्वोपाधिमुद्भाव्य हेतोरप्रयोजकत्वं चक्रे दक्ष्यो(क्षो)ऽक्षपादमुख्य' । तद्योजना चेयम्—यद् यद(द्) दृश्यं 'तत् तदनर्थक्रियाकारि इति नास्ति, पक्षेण व्यभिचारात् । यन्मिथ्या तदनर्थक्रियाकारि, यथा मरुमरीचिकासु जलज्ञानम् । यदनर्थक्रियाकारि तन्मिथ्या, यथा द्विचन्द्रज्ञानम् । व्यतिरेकस्त्वेवम्—यदनर्थक्रियाकारि न भवति तन्मिथ्यारूपमपि न भवति, यथा ब्रह्म इत्युपाधिः । अत्र निर्विलम्बं प्रत्युपाध्युद्भावनाय मूलानुमानदृश्यत्वहेतुवैपरीत्यमदृश्यत्वं प्रत्युपाधि' । अत्र मूलानुमानहेतोरप्रयोजकत्वं कृतमुपाधिना स्वव्यावृत्त्या साध्यमपहरता । ततश्चैवमनुमानमभूत् यथा 'विमतं मिथ्यारूपं न भवति, अर्थक्रियाकारित्वात्, ब्रह्मवत्' इति ।

अत्र प्रत्युपाधिभावना चेयम्—यदर्थक्रियाकारि तददृश्यमिति नास्ति, पक्षेण व्यभिचारात् । यददृश्यं तन्मिथ्या न भवति, यथा परमाणु' । यन्मिथ्या न भवति तददृश्यं यथा ब्रह्म । व्यतिरेकस्त्वेवम्—यददृश्यमिति न भवति तन्मिथ्यैव भवति, यथा शुक्तिकलधौतज्ञानमिति । एव च मूलानुमानमेवागतम् । यथा विमतं मिथ्या दृश्यत्वात्, शुक्तिशकलकलधौतवदिति ।

अथात्रापि केनाप्युपाधिराविर्भाव्यते । तदा स ज्वलत्स्फुलिङ्गचक्रचक्रकस्फोरणेन तिरस्करणीयः इति । पुनरपि मुग्धमेधाविवृद्धयेऽपरमपि—यथा विमतं बुद्धिमत्पूर्वकम्, कार्यत्वात्, घटवदित्यत्र सपक्षस्यासाधारणो धर्मः पक्षेऽवर्तमानो दृश्यशरीरकर्तृकत्वम । तत्रापि पूर्ववदुपाधिव्यतिरेकसपक्षे गगनरूपेऽकार्यत्वं प्रत्युपाधिरिति । सर्वत्रानुपलभ्यमानगुणत्वहेतुना आत्मनोऽसर्वगतत्वसाध्ये घटसपक्षे मूर्तत्वमुपाधिस्तद्व्यतिरेकसपक्षे सर्वत्रोपलभ्यमानगुणत्वं प्रत्युपाधिस्तद्व्यतिरेकान्मूलानुमानमिति । एव सर्वत्र यत्र प्रतिवादिनोपाधिरुद्भाव्यते तदैव तत्पार्श्वादुपाधिव्यतिरेक. कार्यते । तद्व्यतिरेके व्यभिचारादिदर्शने उपाधिवैयर्थ्यम् । तदसम्भवे च तत्सपक्षे मूलानुमानहेतुवैपरीत्य प्रत्युपाधिस्तद्व्यतिरेकान्मूलानुमानमेव भवेदेवं निर्विलम्बमेव प्रत्युपाधिप्रकाशो भवेदिति तत्त्वं पूर्वं प्रायोभणनात् । उपाधिव्यतिरेकसपक्षेऽसाधारण-

मन्यं धर्मं संशोध्य सकलोपाधिलक्षणभावनां विमृश्य प्रत्युपाधिरुद्भाव्य इति तत्त्वम् । तच्च दर्श्यते—यथा कश्चित् सौगतमतानुगतः सर्वपदार्थेष्वेकान्तक्षणिकत्वसाधनाय कण्टकोद्धारबन्धुरमनुमानं पद्यरूपमवीवदत्—

यत् सत् तत् क्षणिकं यथा जलधरः सन्तश्च भावा इमे
सत्ता शक्तिरिहार्थकर्मणि मितेः सिद्धेषु सिद्धा च सा ।
नाप्येकैव विधान्यदापि परक्नैव क्रिया वा भवेत्
द्वेधापि क्षणभङ्गसङ्गतिरतः साध्ये च विश्राम्यति ॥ [ज्ञानश्री]

व्याख्या । सर्वे भावाः क्षणिकाः सत्त्वात् । यत् सत् तत् क्षणिकं यथा जलधरः । सन्तश्चेमे भावाः । तस्मात् क्षणिका इति पञ्चाङ्गव्यवस्थायामपि बौद्धैर्व्याप्त्युपनयरूपाङ्गद्वयस्यैव स्वीकारादत्रानुमाने काव्यप्रथमपादे व्याप्त्युपनयौ दर्शयति । यत् सत् तदित्यादि । अथ हेतुकृता सत्ता किंरूपाऽभीष्टेत्याह सत्तेति । इहानुमानेऽर्थकर्मणि अर्थक्रियाया शक्तिः सामर्थ्यं सत्तेत्युच्यते । यदेवार्थक्रियाकारि तदेव परमार्थसदिति । तदागमवचनादर्थक्रियाकारित्वमिति यावत् सत्तेष्टा इति हेतोः स्वरूपमुक्त्वाऽसिद्धतां परिजिहीर्षुः पक्षधर्मत्वं दर्शयति । मितेः प्रत्यक्षादिरूपायाः सिद्धेषु पक्षीभूतेषु भावेषु सा सत्ता सिद्धा । मितेरपि पदस्योभयत्र सम्बन्धात् स्वरूपासिद्धता आश्रयासिद्धतापि परिहृता । असिद्धतां परिहृत्य विरुद्धता परिजिहीर्षुर्विपक्षस्यैव नित्यैकस्वभावस्य वस्तुनोऽभावं प्रसङ्गदोषपूर्वकं प्रकटयति । नाप्येकैव विधेति नापि वस्तुन एकैव त्रिधा एक एव प्रकार. सर्वकाल नित्यैकस्वभावत्वमिति यावत् । तथास्वीकारे प्रसङ्ग अन्यदापि परक्नदिति । यदि हि वस्तु नित्यैकस्वभाव स्वीक्रियते तदा स्वेष्टकालवत् कालान्तरेऽपि परक्नदिति ज्ञानादन्योऽर्थः पर इति वचनादर्थकृत् अर्थक्रियाकारि भवेत् । यथा कुम्भकारादिः प्रतिनियतकाले घटाद्यर्थक्रिया कुरुते तथा सर्वस्मिन्नपि काले कुर्यादित्यर्थः । दोषान्तरमाह नैव क्रियेति । वा अथवा नित्यैकस्वभावे वस्तुनि क्रिया नैव भवेत् । एव शब्दोऽवधारणार्थत्वात् । सर्वकालमपीति । अयमभिप्रायः। प्रतिनियतकालात् कालान्तरे यद्यर्थक्रिया न स्वीक्रियते तदा प्रतिनियतकालेऽप्यर्थक्रिया न स्यात् । अर्थक्रियाकरणाकरणरूपस्वभावद्वयाङ्गीकारे नित्यैकस्वभावत्वक्षि(क्ष)तेरिति । इत्थमुभयथा प्रसङ्गदोषाविर्भावादर्थक्रियामुत्थापयता प्रतिपक्षस्य नित्यैकस्वभावस्य वस्तुनोऽवस्तुत्वमभ्यधायि । अनर्थक्रियाकारि अवस्त्विति वचनात् । विपक्षाभावाच्चायं हेतुर्न विरुद्ध इति । नाप्यनैकान्तिकस्तत एवेति स्वयं ज्ञेयम् । एवं दोषोद्धारं विधाय साध्ये एव हेतोश्च विश्रान्ति समर्थयति । द्वेधापि

इति अर्थक्रियायाः पक्षे प्रमाणसिद्धत्वाद् विपक्षे उक्तप्रकारेणानुपपत्तेश्चेति द्वेधापि क्षणभङ्गसङ्गतिरस्ति । अतश्चार्थक्रियाहेतुः साध्ये क्षणिकत्वे विश्राम्यति क्षणिकत्वं साधयतीति वृत्तार्थः ।

एतदाकर्ण्य कोपाटोपप्रकम्पमानतनुः संख्यावतां मुख्यः सांख्यः सर्ववस्तुषु आविर्भावतिरोभावाभ्या सदुत्पत्तिं साधयन् एकान्तनित्यत्वमङ्गीकुर्वन् तत्क्षणिकैकान्तनिराकरणायातद्रूपत्वोपाधिप्रबोधनेन साधनस्याप्रयोजकत्वं कृतवान् । तत्र साध्यव्यापकत्वसाधनाव्यापकत्वभावना पूर्ववत् । व्यतिरेकस्त्वेवम्—यदतद्रूपं न भवति तत् क्षणिकमपि न भवति यथा व्योम । आविर्भावतिरोभावोपपत्तिभावनाप्रपञ्चः स्वयमेव प्रामाणिकैरवधार्यः । प्रत्युपाधिशिक्षामात्रत्वादस्येति ।

अथात्र बौद्धस्तूपाधिनिघाटनाय प्रत्युपाधिं प्रकटयति अमूर्तत्वलक्षणम् । साध्यसाधनयोर्व्याप्त्यव्याप्ती पूर्ववत् । विधेये व्यतिरेको दर्श्यते । यदमूर्तं न भवति तन्नित्यमपि न भवति, यथा प्रदीपकलिका । एवं च मूलानुमानमेवमागतम् । यथा सर्वं क्षणिकं सत्त्वाज्जलधरवदिति । एवं मूलानुमानसाधनव्यतिरेकात् पूर्वभावितादन्यो धर्मः उपाधिव्यतिरेकनिदर्शने संशोध्योपाधिनिराकरणाय प्रत्युपाधित्वेन पठनीयः । एवं चोपाध्युन्नीतासिद्धविरुद्धानैकान्तिकादयो दोषा निराकृता भवन्तीति तात्पर्यम् ।

एकान्तक्षणिकाक्षणिकपक्षयोः पौरस्त्योपाधिपुरश्चरप्रत्युपाधिविधुरत्वेन कथमप्यर्थक्रियाकारित्वोपपत्त्यदर्शनादनेकान्धस्पष्टस्पृष्टगजाऽसक(त्क)ल्पविकल्पजल्पिनो जनानिव विवदमानानालोक्य कोऽपि सर्वज्ञोपज्ञवस्तुव्यवस्थया तत्रार्थक्रियाकारित्वोपपत्तिसिद्धिसाधकमनुमानं वदति जैनः—नित्यानित्यात्मकं वस्तु, अर्थक्रियाकारित्वान्यथानुपपत्तेः इत्यत्र तथा स्याद्वादरूपेषु 'सदसदभिलाप्यानभिलाप्यसामान्यविशेषात्मकवस्त्वनन्तधर्मात्मकत्वात्'[इत्या]द्यनुमानेष्वन्तर्व्याप्तिरूपेषु निश्चिततथोपपत्त्यन्यथानुपपत्त्या निर्णीतपक्षधर्मित्वविपक्षव्यावृत्तिरूपया उपाधेर्दूरापास्तत्वादसिद्धविरुद्धानैकान्तिकादीनां शङ्कापि न कार्या तथा सौगतोदितस्वभावकार्यानुपलब्धिरूपहेतुषु त्रिषु । तत्रैकादशानुपलब्धिरूपे तृतीये हेतावपि नोपाधिः ।

तत्र चैकादशानुपलब्धिष्वाद्याश्चतस्रो दर्श्यन्ते । तत्र विरुद्धोपलब्धिर्यथा नात्र शीतस्पर्शोऽग्नेरिति ।१ विरुद्धकार्योपलब्धिर्यथा नात्र शीतस्पर्शो धूमादिति ।२ कारणानुपलब्धिर्यथा नात्र धूमोऽग्न्यभावादिति ।३ स्वभावानुपलब्धिर्यथा नास्त्यत्र घट उपलब्धिलक्षणप्राप्तस्याप्यनुपलब्धेरिति ।४ शेषास्तु सप्ताप्यनुपलब्धयो धर्म(न्याय)बिन्दुशास्त्रप्रतिपादिताः प्रतिभेदरूपत्वेन एष्वेवान्तर्भवन्तीति पृथग् नोपदर्शिताः ।

तथा केवलान्वयिनि केवलव्यतिरेकिण्यपि एकसाध्याविनाभावादिति लक्षणस्याभावात्। तथा पञ्चरूपोपपन्नेऽप्यन्यहेतौ साध्यस्य निर्णीतव्यापकत्वे विपक्षशङ्कानुदयान्नोपाधिः । यथा धूमवत्त्वसाधनोपपन्ने धूमध्वजसाध्यशतांशेनापि यत्र विपक्षशङ्का न भवति तत्रोपाधिर्न भवति । तदभावात् प्रत्युपाधिरपि न भवतीति तत्त्वमिति स्थितम् ॥

इति वादिविजयनाम्नि त्रिविधहेतुखण्डने
प्रत्युपाधिप्रकाशप्रदीपश्चतुर्थोऽधिकारः ।

*

* *

## ५. उपाधिखण्डनाकाङ्क्षाशिक्षा

श्रीजिनं हर्षतो नत्वा वीरं विश्वातिशायिनम् ।
उपाधिखण्डनाकाङ्क्षाशिक्षा लेलिख्यते मया ॥

इह हि सकलतार्किकचक्रचक्रवर्तिना निजनिस्तमस्तममतिस्फीतिमास्फूर्तिविस्मयास्पदीकृतवाचस्पतिना स्वाभिमततत्त्वसाधनायानुमानमवादि । तदाकर्णनमात्रकर्णोत्पलदलोद्गच्छदतुच्छशूलोन्मीलदुन्मादाविसंवादिवादिना प्रतिवादिना उपाधिरुद्भाव्यते । तेन हेतोः स्वसाध्यव्यापकत्वप्रियामपहृत्य हेतोर्व्याप्यत्वासिद्धत्वोत्पादनेनाप्रयोजकत्वमाविश्चक्रे । तदाकर्णनादेव वादिविधीयमानमाद्यत्प्रतिवादिमदमेदुरतापनोदविनोदालोक[नो]त्सुकदिग्देवाङ्गनामन्दानन्दकन्दकन्दलनाम्बुदायमानस्ववाग्विलासाभङ्गसौभाग्यप्रथनाय क्वाप्यश्रुतपूर्वः प्रत्युपाधिः प्रकाश्यते । तेन मूलानुमानहेतोरिव पूर्वोत्पादितोपाधिसाध्यव्याप्तिनिराकरणेन साध्यव्यापे(प)कत्वप्रियां प्रत्याहृत्य स्वसाध्यसाम्राज्येऽभिषेकः क्रियते रावणापहृतसीताप्रत्याहारकश्रीरामदेवेनेव विभीषणे । तत् किमुपाधिर्दूषणं न स्यात् , किञ्चोपाधौ दूषणत्वभ्रम एवेति प्रत्याहतो वाद्याह—

अतिव्याप्तेरथाव्याप्तेः प्रत्युपाधेश्च सम्भवात् ।
चक्रकान्तप्रपाताच्च नोपाधिर्दूषणं पृथक् ॥

अत्र मदमेदुरतरदुर्द्धरगन्धसिन्धुरशिरःसिन्दूरपूरोदारशेष(ख)रायितनिजानवद्यप्रसृत्वरप्रतापभरैः प्रणिगद्यते । साधनाव्यापकः साध्यव्याप्तिरिति लक्षणं लक्ष्यश्चात्रोपाधिः । न च लक्षणप्रतीतिमन्तरेण लक्ष्यप्रतीतिः । लक्षणं चैतन्निश्चेतुं न शक्यते, पक्षेतरत्वेऽतिव्याप्तिशाक्तिप्रकोपपावकाहुतीभूतत्वात् । तच्च प्राथमिकप्रामा-

णिकसुखाववोधाय पूर्वदर्शितानुमान एव दर्श्यते । 'वेदविहिता हिंसा अधर्मसाधनम्, हिंसात्वात् ब्राह्मणहिंसावत्' इत्यत्र साध्यव्यापकत्वं यथा यत्राधर्मसाधनत्वं तत्र पक्षेतरत्वम् । पक्षातिरिक्तव्यर्थहिंसादौ सर्वत्र भावात् । यत्र यत्र हिंसात्वं तत्र तत्र पक्षेतरत्वमिति नास्ति पक्ष एव हिंसात्वेन, पक्षातिरिक्तत्वाभावादिति साधनाव्यापकत्वादतिव्याप्तिः ।

ननु न पक्षेतरोपाधेः साध्यव्यापकत्वं निश्चितम् । पक्षे साध्यसन्देहेऽपि उपाध्यभावस्य निश्चितत्वेन साध्यं प्रत्यन्वयव्यतिरेकव्याप्त्यभावात् । तथाहि—यत् पक्षेतरत् तदधर्मसाधनमिति नास्ति देवपूजनब्राह्मणभोजनादौ पक्षेतरत्वादधर्मसाधकत्वं स्यात् । व्यतिरेकस्त्वेवम्—यत् पक्षेतरन्न भवति तदधर्मसाधनमपि न भवति पक्षातिरिक्तस्यान्यस्याभावात् । पक्षे त्वद्याप्यसिद्धत्वादिति । मैवम् । तथा सति पक्षे साध्यसन्देहेऽपि साधनसद्भावनिश्चयेन हेतोः शङ्कितव्यभिचारित्वं स्यादेव तथा च सर्वानुमानोच्छेदापत्तिः । तर्हि पक्षेतरोपाधिव्युदासाय साध्यसमव्याप्तिरिति पदं गृहीमः । तथापि तत्रैवातिव्याप्तेः यथा 'शब्दोऽभिधेयः प्रमेयत्वाद् घटवत्' इत्यत्र पक्षे साध्यव्यापकत्वनिश्चयादन्वयव्यतिरेकसम्भवात् । यथा 'यदभिधेयं तत् पक्षेतरत्, यत् पक्षेतरत् तदभिधेयम्' । उभयस्य घटादौ सर्वत्र भावात् । यत् पक्षेतरन्न भवति तदभिधेयमपि न भवतीति । अपरमपि, यथा 'अदृष्टं कस्यचित् प्रत्यक्षम्, प्रमेयत्वात् करतलामलकवत्' इत्यादिपरःशतानुमानेषु अन्वयव्यतिरेकसाध्यव्यापकत्वसद्भावात् । समपदग्रहणो(णे)ऽपि नातिव्याप्तिनिरासः । तथा च सत्योऽयमाभाणको जातः 'काकोऽपि भक्षितोऽजरामरत्वमपि न जातम्' इति । ततोऽतिव्यापकत्वान्न लक्षणसिद्धिः ।

अथाव्याप्तिर्दर्श्यते—यथा देशान्तरगतो मैत्रपुत्रः श्यामः तत्पुत्रत्वात्, पुरोदृश्यमानान्यपुत्रवदित्यत्र शाकाद्याहारपरिणतिपूर्वकत्वं साध्यश्यामत्वं न व्याप्नोति । यथा यो यः श्यामः स स शाकाद्याहारपरिणामवान् इति नास्ति । इन्द्रनीलादौ श्यामत्वे सत्यपि शाकाद्या[हार]परिणतेरभावात् अव्यापकत्वम् । पूर्वं हि सर्वत्र लक्षणे द्वयं त्याज्यमेव अतिव्याप्त्यव्याप्ति च । ते चोभेऽपि अत्र स्तः । ततः कथमिदं लक्षणं हेतोर्व्याप्यत्वासिद्धत्वादिदोषोद्घोषणया अप्रयोजकत्वापादने सामर्थ्यं दधातीति चेन्मैवम् । मैत्रपुत्रहेतोः पुरुषधर्मतावलात् पुरुषश्यामत्वमेव पर्यवसितं साध्यम् । तच्चोपाधिना व्याप्तमेवेति चेत् सत्यमुपाधेर्व्याप्तिभञ्जकत्वेन व्याप्तौ वक्तव्यत्वात् व्याप्तिर्विचारणीया । सा च—'यो यो मैत्रपुत्रः स श्यामः' इत्येवास्ति । ननु (तु) 'यो यो मैत्रपुत्रः स स पुरुषश्यामः' इति पुरुषविशेषणवैयर्थ्यात् । यतः साध्य-

श्यामत्वशब्देन यत्र साध्यं तत्रोपाधिरित्येव भणनादिति यत्किञ्चिदेतल्लक्षणमित्युपहसनीयम् ।

प्रत्युपाधेश्च वहुवक्तव्यत्वेन प्राग्दर्शितः । अथ चक्रकान्तेति यदुक्तं तत्र पूर्वमात्माश्रयपातादिदं लक्षणं न प्रीतये प्रीतिस्फीतिमापात्रीभवद्गात्राणां मित्राणामपि । तत्र लक्षणे साध्यव्यापकत्वं हि साध्येन सममनौपाधिकः सम्बन्धः । स चोपाधिज्ञानाधीनज्ञानः । तथा चाव्यवधानेन आत्मापेक्षितत्वं स्यात् । तच्च स्वात्मनि अर्थक्रियाविरोधादिप्रबन्धावरुद्धम् । तल्लक्षणाक्षेपोपलक्षित उपाधिः पक्षात् स्वव्यावर्तनोद्वर्तितसाध्यव्यावृत्तिविपक्षीभवत् पक्षे निर्णीतवृत्तेर्हेतोर्व्यभिचारनिशाचरसञ्चाराविर्भावितानैकान्तिकतादोपकलङ्कपङ्किलतां कर्तुं कथं साधीयस्तां दधातीति चिन्तनीयम् । तदुत्पादनादेवोपाधेर्दूषणत्वं नेतरथा ।

यदुक्तम्— 'व्यभिचारोन्नयं कुर्वन्' इत्यादि । तथा तत्रैवोपाधिलक्षणे दुरुत्तरे-[तरे]तराश्रयापारपारावारप्रोच्छलल्लोलकल्लोलमालाकवलनोज्ज्वलीभवे(व)त्संवर्त्तकहुताशनप्रथमाहुतीभूते कथ नाम दूषणत्वं स्यात् । तथाहि—हेतोः साध्यव्यापकत्वम्, साध्यस्य तेन हेतुना व्याप्तिः, व्याप्तिश्चोपाध्यभाववान् सम्बन्धः, स[ति] च तस्मिन् प्रतीते उपाधिप्रतीतिः, उपाधिप्रतीतौ च उपाध्यभावप्रतीतिरिति । तथा च कथं [त]दधीनोपाधि' पक्षात् साध्येन सह व्यावर्तमानः स(सा)ध्यवैपरीत्यसाधनोद्धतेन हेतोर्विरुद्धत्वोन्नायकत्वकल्पनाय कल्पयिष्यते विचक्षणेनापि भवतेत्यपि विचारणीयम् ।

अथोपाधावात्माश्रयेतरेतराश्रयभावनोद्भवद्विकटकोपाटोपोत्कटकटुकण्टकडङ्कितः पर्याकुलितचेतोवृत्तितया 'प्रमाणाधीना हि प्रमेयव्यवस्था' इति विमृश्य तत्साधनाय प्रमाणं चेक्रीयते । तदा क्रियतां नाम किं तत् प्रमाणं विवादपदशब्दित उपाधिरिति व्यवहर्तव्यम् । साधनाव्यापकत्वे सति साध्यसमव्यापकत्वात् । न यद् एवं न तद् एवम् । यथा धूमध्वजाभावे धूमवत्त्वाभावः । एतदपि प्रथीयस्तरं भवन्मनोरथतरुं न पल्लवयति । स्वरूपासिद्धत्वादत्र हेतोः । पूर्वभावितात्माश्रयेतरेतराश्रयपातविस(श)रारुतामापादिते साध्यव्यापकत्वे साध्ये तर्द्ध(द्ध)र्मत्वाभावात् । अनित्यः शब्दश्चाक्षुषत्वाद् घटवदित्यादिवत् । तथातिवक्रचक्रकाक्रान्तः कथ स्वविक्रममाक्रमिष्यति ? पूर्वोक्तोपपत्त्या निरुपाधिकसम्बन्धव्याप्तिसिद्धेः साध्यव्यापकत्वसिद्धिः, तत्सिद्धावुपाधिसिद्धिः, तत्सिद्धौ च निरुपाधिकसम्बन्धसिद्धि' इत्याद्यावर्तनादिति कियन्तो वा दि(द)धिमाषभोजने कृपणा विवेच्यन्ते ।

अतोऽनेकदोषदूषितलक्षणाधीनोपाधेर्हेत्वाभासातिरिक्तदूषणत्वं नोपपत्तिपद्धतिपदवी-मवगाहते विचारासहत्वादाकाशकुशेशयसुरभित्वसाध्यवदिति । अत एव प्रत्यक्षपरो-क्षप्रमाणप्रगुणीभवदादेशद्वैतादिष्टस्पष्टाभङ्गसप्तभङ्ग्याविर्भावितवस्त्वनन्तधर्मात्मका(क)-त्वोपस्थापितार्थक्रियोपपत्तिशक्तिव्यक्तीभव(त्)स्याद्वादमहावादा(द)व्यासोपन्यासविस्मयी-कृतभूमण्डलाखण्डलदत्तसर्वज्ञपुत्रविरुदैर्वादिमदविद्रावणोन्निद्रैरत एव जैनेन्द्रचन्द्रैरुपाधौ व्यभिचारातिरिक्तदूषणत्वं नाङ्गीक्रियते । जैनेन्द्राणां च पुरतः का एता विभीषिकाः यतः उक्तं स्याद्वादरत्नाकरे —

तावदेव लभते प्रतिष्ठितं प्रोक्तमेतदखिलं कुतीर्थिकैः ।
यावदेव न जिनेन्द्रसूनवो व्यञ्जयन्ति दृढयुक्तिडम्बर[म्] ॥

अत एव सर्वापरतीर्थिष्वहंप्रथमत(त)स्तानेव वृणुते साधुविजयलक्ष्मीः ।

*

* *

जिनहर्षं गुरुं नत्वा स्मृत्वा सारस्वतं महः ।
पराक्षिप्तेन सत्पदोपन्यासाय प्रयत्यते ॥

इह हि कश्चिदखर्वगर्वपर्वतारोहणाग्रणीः प्रवीणप्रामाणिका(क)ग्रामणीः प्राथमिक-प्रामाणिकं स्वगुरुचरणपरिचर्याचरणप्रसादसंवादसोदरं सिद्धसारस्वतोद्गारानुकारं गङ्गा-पगोत्तुङ्गचङ्गरङ्गत्तरङ्गभङ्गीसुभगं तत्तदनवद्य(तत्राप्यनवद्यसद्य)स्कप्रा(प्र)माणप्रयोगं व्याचक्षाणं विचक्षणं वीक्ष(क्ष्य) अन्वयिव्यतिरेकिहेतुमहाविद्यानुमानवक्रच्छायानुमान-हेतुखण्ड[न] उपाधिप्रत्युपाधिकर्षणोपायतत(त्)खण्डनादिना तत्पराजयाशक्त-मात्मानं मन्यमानः स्वचण्डतुण्डताण्डवाडम्बरेण सर्वमयथावन्मन्यमानः स्वाखण्डप्रचण्ड-पाण्डित्यप्रकाशनाय स्वोत्कर्षाकर्षकप्रतिज्ञापदानि पापठीति शठतामठः । यथा—

आकल्पकालं येऽनल्पविकल्पैर्जल्पनक्षमाः ।
वय [व]दामस्ते पद्यैरनिन्द्यैस्तत्र के परे ॥

अन्यच्च—

घटीं वा यामं वा दिवसमपि वा जल्पितुमलं
क्षमास्तेषां पङ्क्तौ न खलु गणनीया वयममी ।
स्फुटैः सारैश्चञ्चद्बहुविधरसैः पद्यनिवहै-
र्युगान्तं यावद्धे प्रभणितुमलं ते खलु वयम् ॥

इत्यादिपद्यैः परक्रियमाणाधिक्षेपमाकर्ण्य यस्तद्दुर्मदापनोदविनोदाय नोत्सहते स पौरुषात् परिभ्रष्ट इत्युच्यते । यथा—

यो वा वादिनं सम्प्राप्ते कम्पते मूढमानसः ।
केवलं स गुरुक्लेशावेशायैव नरः खरः ॥

श्रीवादिदेवसूरिपादैरपि पठितम् —

आः कण्ठशोषपरिपोषकफलप्रमाण—
व्याख्याश्रमो मयि बभूव गुरोर्जनस्य ।
एवंविधान्यपि विडम्बनविड्वराणि
यः शासनस्य ह ह हा मसृणः शृणोमि ॥

इत्यादि मर्नासि विधाय पूर्वं सामवाक्यै रेव निर्वचनीयः कार्यः । उपशमफलत्वाच्छासनस्येति । यथा—

अहङ्कारोद्रेकः कलयति न वा संमनसिनो
न च द्वेषोन्मेषः शमरससुधासारविशदे ।

एवमुक्तोऽपि यदि न निवर्तते तदोत्तरार्धनिरूपणेन तिरस्कार्यः, यथा—

परं ये दौर्मौ(मु)ग्धा(ग्ध्या)द्दधति गुणमात्सर्यमधियो
न मृष्यामस्तेषां क्षणमपि मदोन्मादमधुना ॥

ज्ञास्यते वादवैदुष्यं ज्ञास्यते गुरुगौरवम् ।
स्थास्यतेऽस्मदुपन्यासो विन्यासोत्तरसङ्गरे ॥
श्रूयतां श्रूयतां पूर्वं स्थीयतां स्थीयतां स्थिरम् ।
वयं वदामस्तत्पद्यैरनिन्द्यैस्तर्हि तद्यथा ॥
घटोऽयमेतज्जनिकृद् विनाशिज्ञानेतरज्ञानपदेन जन्यः ।
कार्यत्वतः कुम्भवदत्र चिन्त्यं तथोपपत्त्येतरथा न वै स्यात् ॥

मूलानुमानं चेदम्—अय घट एतज्जनि(न)कानित्यज्ञानेतरज्ञानजन्यः कार्यत्वात् पटवत् । एते उभेऽपि जगत्कर्त्तृत्वसाधके, एते एव शब्दपरावृत्त्या जगदकर्तृत्वसाधके । यथा —

घटोऽयमेतज्जनिकृद्विनाशि—
ज्ञानेतरज्ञानभृता न जन्यः ।
कार्यत्वतः कुम्[भ]वदत्र नाना-
त्वमेव न स्याज्जगतस्तथात्वे ॥

एतन्मूलानुमानम्—नायं घट एतज्जनकानित्यज्ञानेतरज्ञानजन्यः, कार्यत्वात्, पटवत्। तथा—

घटोऽयमेतद्घटनिष्ठ(ष्ठ)बाध्य-
धर्मातिरिक्तोत्तरधर्मसाध्य।
वेविद्यते मेयपदोपपन्ना-
द्धेतो· परब्रह्म[व]दत्र चिन्त्यम् ॥

मूलानुमानं चेदम्—अयम् [घट] एतद्घटनिष्ठा(ष्ठा)त्यन्ताभावान्यधर्मप्रतियोगी, मेयत्वात्, ब्रह्मवत्। एते उभेऽपि प्रपञ्चसाधके। तथा—

अंशिन. स्वाशगां(म)त्यन्ताभावस्य प्रतियोगिनः।
अंशत्वादितराशीवद्दिगेषैव गुणादिषु ।

मूलानुमानमिदम्—अयं पट एतत्तन्तुनिष्ठा(ष्ठा)त्यन्ताभावप्रतियोगी अवयि(य)-व(वि)त्वात् पटान्तरवत्। एते उभेऽपि प्रपञ्चमिथ्यात्वसाधके। तथा—अयं पट एतत्तन्तुनिष्ठा(ष्ठा)त्यन्ताभावप्रतियोगी मेयत्वात्, ब्रह्मवदिति। एतत्प्रपञ्चसत्यत्वसाधकम्—

अस्त्येव कश्चिज्जगत· प्रमाणा-
दसम्भवद्बाधकतः प्रमाता
करस्थमुक्ताफलवत् परोक्ष-
परोपदेशानुपपत्तितश्च ॥
नास्त्येव कश्चिज्जगतः प्रमाता
तद्ग्राहकस्य प्रमितेरभावात्।
नास्त्येव यद्ग्राहकता प्रमाणै-
र्न तद् यथा तुङ्गतुरङ्गश्रृङ्गम् ॥

इति सर्वज्ञसाधकोत्थापकानुमाने। एवं च यथायुक्तिगद्यपद्यैरनुमानानि कृत्वा कण्टकोद्धारोऽप्येवं निर्विलम्बं विधेयस्तद्युक्तिश्चैवम्—

न चात्र पक्षक्षपदक्षदोष-
सश्लेषपोष· परिपोस्फुरीति।
आख्यायते चेदथ तद्ग-
दोषो निवेद्यतां तत् कतमश्चकास्ति ॥
पक्षे प्रतीतत्वनिराकृतत्वा-
नभीप्टता साध्यविशेषणेषु ।

एतेषु दोषेषु न कोऽपि तावत्
तल्लक्षणानीक्षणतः समस्ति ॥
नासिद्धताकामुककुट्टिनीनां
कटाक्षलक्षैरपि वीक्ष्यतेऽसौ ।
हेतुः सुनिर्णीतसुपक्षसाध्य-
धर्मे स्वनिर्णीतिपवित्रितो यत् ॥
विरुद्धतादुर्धरसिद्धसोको-
त्तरीगरीयस्तरदोषदौष्ट्यम् ।
हेतुर्निधत्ते प्रतिपन्थिपक्ष-
व्यावृत्तिमन्त्रो(मन्नो) वरिवर्त्यसौ यत् ॥
पक्षः प्रमाणान्तरबाध्यबाधां
धत्ते न साध्यानुगसाधनेऽस्मिन् ।
तस्मान्न कालात्यया(य)तापदिष्ट-
दोषोग्रदर्वीकरदौस्थ्यमास्ते ॥
न साधने सत्प्रतिपक्षदोष-
कथाप्रथामेति वृथाऽविमाना ।
तथाविधप्रत्यनुमानबाधो-
त्थानाद्यभावादिति भावनीयम् ॥
नोपाधिबाधाविधुरत्वमास्ते
सुनिश्चितव्यापकसाधनत्वात् ।
धूमध्वजस्य प्रमितौ तथात्वात्
न तद्भ्रमस्तद्वदिहाऽपि साध्ये ॥
पद्यैरनिन्द्यैः सुपदप्रयोग-
चमत्कृतप्राज्ञजनैरनूनैः ।
आशूच्यतां स्वीयवचःप्रपञ्च-
चञ्चूक्तिभिर्व्यक्तितवर्णवादैः ॥
विलम्बलम्बाग्रितकालमेते
समे क्षमन्ते न सभासदोऽत्र ।
तन्मौनमुद्रामपहायमानो-
पन्यास[विन्यास-]विधिर्विधेयः ॥

उच्यता मुच्यता मौनमित्याद्यनल्पालापैरनुमानानवबोधादिना प्रतिसमाधानयुक्तीनामस्फुरणेन वादीन्द्रेण मौनमुद्रैवाद्रियते तदावृतैव विजयश्रीः प्राप्तैव प्रभावकेपुरेषा। अथ कदाचित् तथाविधप्रमाणप्रयोगप्रतिबोधोत्पन्नौद्धत्याविद्धबुद्धिना पूर्वमेव वक्रच्छायं महाविद्यासत्कं वा प्रमाणं क्रियते। तत्र प्राथमिकत्वेन निर्विलम्बं प्रतिसमाधानाय युक्तयो न स्फुरन्ति। तत्र च प्रमेयत्व-सत्त्व-मेयत्व-प्रतीयमानत्वानैकान्तिकहेतुत्वेष्वेकतमो हेतुर्भवति। तदा तत्र प्रसङ्गोद्भावनेन हेतावसिद्धत्व-विरुद्धत्वाऽनैकान्तिकत्वादि भावनीयम्। तद्युक्तिपद्यं त्विदम्—

विचक्षणाः साधनमस्तु साध्या-
भावोऽस्तु तद्बाधकमत्र नास्ति।
ततोऽत्र साध्याप्रतियोगिकत्वात्
हेतोरसिद्धिः स्फुटमीक्षतेऽत्र॥

अथैतेषु हेतुषु एकोऽपि नास्ति तदा प्रसङ्गफलाभावेऽप्युद्भाव्यते एकशो वादिनः स्खलनेनान्या अपि युक्तयः स्फुरन्ति। अथ तदुद्भावनायुक्तौ विकल्पैः प्रत्यवस्थानं विधीयते। तत्पद्यमिदम्—

किं निश्चितो हेतुरनिश्चितः स्या-
दात्माश्रयाद्याः प्रथमे विकल्पे।
असिद्धताद्याश्चरमे च पक्षे
पूर्वोक्तयुक्त्या परिभावनीयाः॥

आदिशब्दादितरेतराश्रयचक्रकाद्याश्चरमेऽसिद्धविरुद्धाने( नै )कान्तिकाश्च पूर्वोक्तयुक्त्या परिभावनीयाः। अन्यच्च प्रत्यनुमानं वा विधेयम्। तच्चेदम्—

पक्षोऽयमेतत्प्रतिपक्षसाध्य-
धर्माश्रयो मेयपदोपपन्नात्।
हेतोर्विगीतेतरवाच्यवद्वै
विचार्यमेवं प्रतिमानमेतत्॥

कण्टकोद्धारस्त्वेवम्—
नासिद्धदोषः परिपोस्फुरीति
सल्लक्षणानीक्षणतोऽत्र हेतौ।
यदव्यापकेनाव्यतिरेकि तत्त्वं
निर्णीतवृत्त्या वरिवर्ति विद्वन्॥

तथा विरुद्धोद्धरदुर्भगस्य
सङ्गं न सङ्गच्छति लेशतोऽसौ ।
सुनिश्चितं सम्प्रति यद्विपक्ष-
व्यावृत्तिमेषोऽत्र बिभर्ति हेतुः ॥

तथाप्यनैकान्तिककुञ्जरेण
न दृश्यते हेतुमृगाधिराजः ।
नासौ यतः शात्रवपक्षकक्षां
शतांशतोऽपि क्षमते कदाचित् ॥

एवं च प्रतिपक्षपराजयो भवतीति ज्ञेयम् । अत एव पूर्वमेव पर्धैर्यद्य-भ्यासः कृतः स्यात् तदा व्यामोहो न भवति बुद्धिप्रकाशप्रागल्म्यक्षोभाभावमनःप्रस-त्त्यादयो गुणा भवन्ति इति तत्त्वम् । एवं च प्रतिपक्षपराजयाज्जिनशासनप्रभाव-सम्यक्त्वशुद्धिसुलभबोधिबीजभवनादिना क्रमेण मोक्षप्राप्तिरिति तत्त्वम् ।

श्रीमत्तपोगणनभोऽङ्गणभासनैक-
भानूपमाः परमतापिमहःसमूहाः ।
शश्वन्नभोगरुचयः शुचयस्तपोभिः
श्रीसोमसुन्दरगुरुप्रवरा बभूवुः ॥
तेषां सन्ततिगणपतिलक्ष्मीलीलाविलासगोविन्दाः ।
श्रीमल्लक्ष्मीसागरगुरवो गोपीवरा रेजुः ॥
यत्कृष्णवर्त्माव्यभिचारिधूमा—
नुमानसम्यग्(क्) समुदीरितं तत् ।
अकृष्णवर्त्मापि विशिष्टधूमो-
ज्ज्वलच्छविर्यद् यशसां समूहः ॥

तत्पट्टोदयभूधरसहस्रकरसोदरा युगप्रवराः ।
श्रीसुमतिसाधुसूरीश्वरा जयन्त्यसमतममहसः ॥
हृत्कुण्डान्तरमण्डितोज्ज्वलतरध्यानाग्निना यैः स्फुरत्-
कामः श्यामतनुर्व्यधायि सहसा नष्टोऽथ दुष्टोऽसकौ ।
तापाक्रान्ततनुः सुधामयतनुं शिश्राय शीतद्युतिं
तस्मिन् श्यामललाञ्छनच्छविमिषादद्याप्ययं वीक्ष्यते ॥

तेषां श्रीगणराज्ये विद्यागुणगौतमानुकारकृताम् ।
श्रीजिनहर्षगुरूणां शिष्यशिशुः साधुविजययतिः ॥
प्राथमिकप्रामाणिकपठनायालीलिखद्यथावगमम् ।
प्रकरणमिदं सुधीभिः संशोध्यं मयि कृपा कृत्वा ॥
यः पठति वादिविजयप्रकरणमिदमादितोऽपि कौतुकतः ।
अहमहमिकयामोदात् वृणुते तं साधुविजयश्रीः ॥

इति वादिविजयप्रकरणं समाप्तम् ।

*

श्रीमुनीश्वरसूरिनिबद्धः

# ॥ प्रमाणसारः ॥

ब्रूमः श्रिये तं वरिवस्य सार्वं
रहस्यमुद्दिश्य विशेषदृष्टीन् ।
स्पष्टाष्टकर्मप्रकृतीर्विजित्य
जग्राह योऽनन्तचतुष्टयं प्राक् ॥
तर्कान्तविद्याः समवेक्ष्य जैन-
तीर्थान्यपि क्षोणिभुजां सभाश्च ।
स्वान्तं यदा शान्तरसान्तरासी-
न्मुदा तदाऽयं विहितोऽस्ति गुम्फः ॥
अजिह्मवाग्ब्रह्मवशात् प्रमाण-
सारप्रबोधाख्यमधीत्य गुम्फम् ।
अखर्वगर्वान् प्रतिवादिविद्या-
मुद्रार्थिनो दिग्विजये जयन्तु ॥
रहस्यं प्रोक्तुकामस्य प्रमाणस्योपदर्शनम् ।
सागरं गन्तुकामस्य हिमवद्गमनोपमम् ॥

ननु सम्बन्धाभिधेयप्रयोजनवत्प्रकरणकरणं स्यात् । इह ज्वरप्रसरापसारिशेषशिरोरत्नोपदेशवदशक्यानुष्ठानाभिधेयं 'दशदाडिमानि षडपूपाः कुण्डमजाजिनम्' इति सम्बन्धवन्ध्यं च जनन्या[ः] पाणिपीडनोपदेशवदनभिमतप्रयोजनं स्यात् । तत्र प्रेक्षाचक्षुषः क्षोदिष्टामपि प्रवृत्तिं न प्रारभन्ते । तदिह प्रमाणसारावबोधे निखिलं सिद्धम् । तदिदमाकिमेतकन्न [ ? ] । अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्को रहस्यज्ञानं प्रमाणमिति, प्रमाणेन चरन्तीति प्रामाणिकाः, तेषां प्रामाणिकानां चतस्रो विप्रतिपत्तयो भवन्ति प्रमाणस्य स्वरूप-सङ्ख्या-फल-विषयलक्षणाः । तत्र प्रमाणस्वरूपमिति आदितः । अत्र साकाङ्क्षं वचनं प्रमाणम् । प्रमिणोतीति प्रमाता आत्मा वा, प्रमाणं न, साधकत्वात् कर्तृत्वाच्च । प्रमीयते योऽर्थः प्रमेयं वा, प्रमाणं न, साध्यत्वादस्य कर्मपदत्वाच्च । प्रमातीति प्रमा सम्यगनुभव एव वा, प्रमाण न, प्रमा-प्रमाणयोर्महान् भेदः, प्रमायाः कार्यरूपत्वात्, [प्रमाणस्य] तावत् करणस्य कारणरूपत्वादिति । अथ घटमहमात्मना वेद्मीति – अहमित्यात्मा ज्ञाता कर्ता, घटमिति ज्ञेयं कर्म, वेद्मीति फलं क्रिया । केन ? आत्मना ज्ञानेन(ने)[ति] करणव्युत्पत्तेश्च कर्तृ-कर्मविलक्षणं तद्वेदितव्यं प्रमाणम् ।

जितं जितं वाद्यतां मित्र झल्लरी। अलमलं गल्लझल्लरीझात्कारेण। किं वहीयाननेहा नीरसो निरस्यते। उत्तिष्ठोत्तिष्ठाप्रामाणिक! प्रामाणिकमण्डलीतः। प्रकृतं ब्रूमहे महेच्छास्तावदनुष्ठीयते प्रमाणगोष्ठी।

अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः प्रमाणाङ्गम्। सगया-दिव्युदासविशदं प्रमाणपदमासाद्य तत्त्वज्ञानार्थी कारणोपपत्तीर्मृगयते। भावा अवि-ज्ञातपरमार्था अवान्तरभेदकारणज्ञानेन निर्णीतार्थाः स्युः। मानाधीना मेयसिद्धिर्मा-नसिद्धिश्च लक्षणात्। प्रमाणमिति साकाङ्क्षां(क्षं) वचनम्। तत्र मानसिद्धिश्च लक्षणात्।

तत्र लक्षणं द्वेधा – सामान्यलक्षणं विशेषलक्षणं च। तत्र स्वपरजातीयव्या-वर्तको धर्मो लक्षणमसाधारणमेव। पटात् घटस्वरूपं व्यावर्तयति घटात् पटस्वरू-पमिति स्वपरजातीयव्यावृत्तिः। लक्षणे त्रीणि दूषणानि—अव्यापकत्वम्, अतिव्या-पकत्वम् असम्भवित्वं चेति। स्वपक्षमपि न व्याप्नोत्यव्यापकम्। यथा ब्राह्मणश्चतुर्वेदाभिज्ञः, व्रात्येनानैकान्तिकत्वात्। स्वपरपक्षसिद्धौ समत्वेऽतिव्या-पकत्वम्। यथा यज्ञोपवीतधारी ब्राह्मण', क्षत्रियादावतिव्याप्तिः। ब्राह्मणेन सुरा पेया द्रवद्रव्यत्वात् क्षीरवदित्यसम्भवित्वं चेति।

इह हि न्यायशास्त्रे चतुर्धा प्रवृत्तिरस्ति—उद्देशो लक्षणं परीक्षा विभा-गश्चेति। उद्देश' किमुच्यते? नाम्ना पदार्थानां संक्षेपेणाभिधानमुद्देशः। उद्दिष्ट-स्वपरजातीयव्यावर्तको धर्मो लक्षणम्। लक्षितस्य यथाक्रमं विचारः परीक्षा। परी-क्षितस्यावान्तरभेदप्रकटनं विभाग'। तत' प्राक् सूत्रे प्रमाणस्वरूपादुद्देशः कृतः। ततो 'यथोद्देशं निर्देश'' इति न्यायमाश्रित्य चतुर्धा विप्रतिपत्तौ प्राक् प्रमाणस्व-रूपमाह—'स्वपरव्यवसायि ज्ञानं प्रमाणम्'। स्वं आत्मा ज्ञानस्य स्वरूपम्। परः स्वस्मादन्योऽर्थ इति यावत्। तौ विशेषेण यथावस्थितस्वरूपेणाचेतनस्य सन्निकर्षादेः पराकरणेनावस्यति निश्चिनोतीत्येव शील यज्ज्ञानं स्वपरव्यवसायि प्रमाणमिति सामान्यलक्षणम्। ततो ज्ञानमेवैतत्। ज्ञानस्यैको ह्युत्पत्तिक्षणो द्वितीयो ज्ञप्तिक्षण। ज्ञानस्य प्रामाण्यमप्रामाण्यं च। अवग्रहेहादिभिरासन्नदशायां घटादिज्ञानोत्पत्तिक्षणे प्रमेयाव्यभिचारित्वं प्रामाण्यं परत'। अनभ्यासदशायां तु सानुमति धूमवत्त्वाद्गोपा-लघटचादौ सदोषवह्निमत्त्वज्ञानोत्पत्तिक्षण अप्रामाण्यं परत एव, ज्ञप्तिक्षणे तु ज्ञानस्य प्रामाण्यं सवादकज्ञानत' परत' प्रादुर्भवति। ज्ञप्तिक्षणे तु बाधकज्ञानतोऽनासन्नद-शायामप्रामाण्यमपि परत इति॥

तदिदं विवाद(दा)स्पदीभूतमदुष्टं सिद्धं प्रमाणस्वरूपम् । ततो उत्पद्य ज्ञानं किं गृह्णीयात् । यत्तावदुक्तं प्रमीयते वस्तुतत्त्वार्थोऽनेनेति । तत् सामान्यविशेषाद्यनेकात्मकं वस्तु । पूर्वापरपरिणामसाधारणं द्रव्यं सामान्यम् । तदाश्रया विशेषाः । गुणपर्यायवद् द्रव्यम्[1] । यथाऽऽत्मनि ज्ञानाम् । सहभावी गुण । क्रमभावी पर्यायः । गुणः कथम् ? यथा आत्मा द्रव्यम्, ज्ञानं गुणः । पर्यायः कथम् ? यथाऽऽत्मनि नर-नारक-तिर्यक्त्वादिः ।

द्रव्यं पर्यायवियुतं पर्याया द्रव्यवर्जिताः ।
[क्व] कदा केन संदृष्टा दृष्टा मानेन केन वा ॥ [ ]

द्रव्यापेक्षया सर्वे भावा नित्याः । पर्यायापेक्षया सर्वेऽनित्याः । उत्पादव्ययध्रौव्यात्मकं सत्[2] । तद्भावाऽव्ययं नित्यम्[3] । आदीपमाव्योम नित्यानित्यम् । मानाधीना मेयसिद्धिः । प्रमेयं प्रमाणसिद्धमिति । कथमिति ? परे गिरं सङ्गिरन्ते ।

अयुतसिद्धानामाधार्याधारभूतानामिहप्रत्ययहेतुः सम्बन्धः स समवायः । यथा शिलातलशकलयुगलानुसंधायकं तार्तीयकतया रालादिद्रव्यम् । तयेन्द्रियार्थज्ञानसम्बन्धी इहप्रत्ययो विशेषणभावात्मकः । इहभूतले घटोऽस्ति । इह भूतले घटो नास्ति । शुक्लरूपं कृष्णरूपशून्यम् इह शुक्लरूपे कृष्णरूपं नास्ति । गृह्यते येन यद्भावस्तदभावस्तेन गृह्यते । तदपरे प्राहु—

इन्द्रियेण परिच्छिन्ने रूपादौ यदनन्तरम् ।
तद्रूपादिस्ततस्तस्य मनोज्ञानं प्रवर्तते ॥ [ ]

आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेनेति । शब्दार्थज्ञानं च वाच्यवाचकभावसम्बन्धात् । वाच्योऽर्थः । वाचकः शब्दः । स्वाभाविकसङ्केतितशब्दग्रहणान्नियमितार्थस्यैव ग्रहणं किम् ?—पृथुबुध्नोदराद्याकारवानर्थक्रियाकारि(री) दासीशिरसि चेष्टत इति घटः । घट इत्युक्ते तरङ्गशृङ्गभृङ्गशृङ्गारभृङ्गारादिषु घट एवादीयते न तु पटः ।

नात्र सम्बन्धभावो वक्तुं युक्तः । अथ तदयं शब्दार्थयोर्भवंस्तादात्म्यं तदुत्पत्तिर्वाच्यवाचकभावो वा । प्राचिपक्षे स एवात्मा यस्येति शब्दार्थद्वये ह्येकत्वमेव, सर्वभावानां शब्दरूपता वाऽर्थरूपता वा । यदि शब्दरूपता तर्हि भावानां स्वस्ववाचकत्वस्वभावानां युगपत् सर्वदा गुमगुमायमानताप : सङ्गीतकारम्भनिभृतमिव त्रिभुवनं चकास्यात् । पटशब्दोच्चारणत एवावरणक्रिया प्रसज्येत । भावानामर्थरूपतैव चेत्

१ तत्त्वार्थसूत्र ५.३८ । २ तत्त्वार्थसूत्र ५.३० । ३ तत्त्वार्थसूत्र ५.३१ ।

तर्हि खड्गाग्निमोदकोच्चारणे वदनस्य छेद-दाह-पूरणादिप्रसक्तिः। अथ द्वये ह्येकत्वं कथम्? शब्दस्तु कर्णकोटरावलम्बी साक्षात् क्षितितलमिलितकुम्भस्तम्भाम्भोरुहादिभावराशिरित्यतस्तावत् तादात्म्यपक्षोऽपि न क्षेमकारः।

तदुत्पत्तिरपि। शब्दादर्थं उन्मज्जेदर्थाद्वा शब्दः? शब्दादर्थश्चेत् तर्हि घटशब्दोच्चारणे [स]ति जलाऽऽहरणक्रिया सिद्धैव को नाम सूत्र-प(ख)ण्ड-दण्ड—चक्र—चीवरादिकारणमीलनक्लेशमाश्रयेदिति। वाक्यतः प्रयोजनं सिद्धम्। द्वितीयभिदाया तु अर्थाद्वा शब्दः। स तु ताल्वोष्ठपुटादिव्यापा[रा]देव दृष्ट', न तु कलशादेः।

वाच्यवाचकभावोऽपि तदवस्थो व्यवस्थादौस्थ्यस्थेमानमास्तिघ्नुते। किं वाच्यवाचकयोर्भेदो वाऽभेदो वा भेदाभेदो वा? भेदश्चेत् तन्नियमितार्थग्रहणाभावादसम्बद्धताल्वताल्लता लालयात्। अभेदे कथं साक्षात् शब्दार्थावुपलभ्येते तदित्ययुक्तिबन्धकीसम्पर्कतोऽस्पृश्य एवायं पक्षः। भेदाभेदपक्षश्चेत् पर्यायान्तरे कथञ्चिदविष्वग्भावात्मकः सम्बन्ध एवाङ्गीकृतः सुधा(धी)मद्भि[ः]। तदिति तटादर्शिशकुन्तपोतन्यायाज्जिनोक्तिष्वेव विश्रामः॥

अर्थोपलब्धौ सन्निकर्षादेः प्रामाण्यमामनन्ति वैशेषिकाः। अदग्धदहनन्यायेन तान् प्रत्याचक्ष्महि। न वै सन्निकर्षादेरज्ञानस्य प्रामाण्यमुपपन्नम्। तस्यार्थान्तरस्येव स्वार्थव्यवसितौ साधकतमत्वानुपपत्तेः। न ह्यचेतनस्तम्भः स्तम्भान्तरं निश्चिनोति। न हीन्द्रियवदञ्जनभोजनादेः सन्निकर्षादर्थान्तरज्ञानं सजाघटीति। द्रव्येन्द्रियं तु भावेन्द्रियाधीनम्। भावेन्द्रिय ह्यात्मज्ञानमेव युक्त्यन्तरेण स्वीकृतं स्यादिति फलितार्थः। अपि च—

अर्थस्य प्रमितौ प्रसाधनपटु प्रोचुः प्रमाणं परे
तेषामञ्जनभोजनाद्यपि भवेद् वस्तु प्रमाणं स्फुटम्।
आसन्नस्य तु मानतां यदि तदा संवेदनस्यैव सा
स्यादित्यन्धभुजङ्गरन्ध्रगमिव तीर्थ्यैः श्रितं त्वन्मतम्॥ [ ]

अत्यन्तव्यावृत्तानां पिण्डानां यत. कारणादन्योऽन्यस्वरूपानुगमः प्रतीयते तदनुवृत्तिप्रत्ययहेतु' सामान्यम्। एकाकारा प्रतीतिरेकशब्दवाच्यता चानुवृत्तिः सर्वत्र गोत्वं गोत्वमिति। भावाः सामान्यविशेषात्मकाः स्वभावसामग्रीतः स्वत एव सामान्यविशेषात्मका' स्यु। घटे घटत्वमिति सामान्यम्। तदाश्रयाः सङ्ख्या-वर्ण-परिमाणादयो विशेषाः।

निर्विशेषं हि सामान्यं भवेत् खरविषाणवत्।
सामान्यरहितत्वेन विशेषास्तद्वदेव हि॥ [श्लो० वा० आकृति १०]

सामान्यरहिता विशेषा मा(म)ण्डूकजटाभारानुकाराः । विशेषरहितं सामान्यमपि तदवस्थम् । तदिति सामान्यविशेषाद्यनेकात्मकं वस्तु प्रमेयमनुगतविशिष्टाकारप्रतीतिविषयत्वात् पूर्वा[परा]कारपरित्यागोपादानस्वरूपपरिणामेनार्थक्रियाकारित्वाच्च सिद्धम् । सामान्यपक्षवादिनो मीमांसकाः सामान्यतोऽर्थक्रियां कुर्युः । विशेषवादिनो बौद्धाः विशेषानेव प्रमाणयन्ति सामान्यं पराकुर्वन्ति । जैनास्त्ववियुतसामान्यविशेषस्वरूपवादिनः ।

अथ तत्त्वमनन्तधर्मात्मकमेव सत्त्वान्यथानुपपत्तेरिति । एकान्तपक्षोऽपि न क्षोदक्षमः । उत्पादव्ययध्रौव्ययुक्त सत्[1] । तावदेकान्तनित्यस्य सत्त्वस्यात्मादे[:] सुखदुःखोपभोगः कथम् ? एका सुखावस्थाऽपरा दुःखावस्था । न हि गुणो गुणिनमतिरिच्य क्वचन केवलोऽवलोकितः । अवस्थाभेदेऽवश्यमवस्थावतोऽपि भेदः स्यात् । अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्चेति[2] । स्वभाव एव हि कारणमनित्यतायाः । तर्ह्येवमेकान्तनित्यात्मनोऽनित्य[ता] एव प्रत्युत भवितुमर्हति । लाभमिच्छतो मूलक्षतिरेवैवम् । गेहे नर्दितया स्वगृह एव प्रणिगद्यमानं हृद्यं न तु प्रामाणिकप्रकाण्डपर्षदि ।

एकान्ताऽनित्यस्यात्मनस्तावत् कृतकर्मनाशोऽकृतकर्मोपभोगश्च । येनाऽनित्यात्मना सुकृतं कृतं स काकनाशं नष्टः क्षणान्तरे सान्वयविनाशेन वासनां दत्त्वा, अलक्तद्रवभावितबीजे कर्पासे रक्तता यथा, दग्धे रामठे परिमलो यथा । तथा चामनन्ति अपर एवात्माऽवतातरीति । तथा सति प्राक्कृतोपभोगोऽपरस्य कथंकारं प्राग्भवे स्मारं स्मारं दत्तमादत्ते । कथमिति ? येनानित्यात्मनाऽसुकृतं कृतं स तावच्चौरंकारं पलायितः परकृतं कोऽयमपरः सम्बन्धविनाकृतो लभते । 'यः सापराधः स एव दण्ड्यः' अत्र न तु [स] मान्यो(न्यो ?) न्यायः । क्षणान्तरोत्पन्न आत्मा स्वकृतमेवोपभुङ्क्ते न तु परकृतम् । अथ यत् तदस्तु नाम । अनित्यात्मगता सा वासनाऽऽत्मनो भिन्नाऽभिन्ना वा । भिन्ना चेत् कथं तस्येति सा । अभिन्ना चेत् साऽनित्या नित्या वा ? नित्या चेत् स्वपदे कुठारप्रहारः प्रतिज्ञाहानिर्नाम निग्रहस्थानम् । अनित्या चेत् सा कौतस्कुती सहैवात्मना वराकी काकीव करतालीभिस्त्रातैव । अथ क्षणिकात्मा सान्वयं निरन्वयं वा विनश्यति ? सान्वयं चेत् तर्हि समूलकाषं कषित एव । द्वारिकादाहसन्देशार्पकसदेहवत् तत्र न कोऽपि क्षणान्तरभावी । सोऽयं ताथागतधर्मकीर्तेः पन्था दुस्तरः । का गतिस्तावदस्य ?

१. तत्त्वार्थसूत्र ५.३० । २ प्र० वा० स्वोपज्ञवृत्ति पृ० १३ ।

अथ क्षणिकात्मा निरन्वयं विनश्यति, अन्वयरूपां वासनां दत्वा क्षणान्तरभावी भवति चेन्ननु धर्मोत्तरत्वादिस्तव सन्धासम्बन्धाभिसन्धिरिति—यत् किलात्मा क्षणविनाशी। अन्वयरूपा वासना तिष्ठति। सा वासना परम्परां प्रवर्तयतीति। नूनं नित्यानित्यगुणोपभोगभाक् स एवात्मा अन्धभुजङ्गरन्ध्रमिव, यथा अन्धो भुजङ्गो यत्र तत्र भ्रान्त्वा सरलः स्वरन्ध्रमेव विशति; परैः पक्षान्तरे जिनमतमेवाश्रितम् ॥

मनस्ते कुत्रचिद्यातु वपुस्ते वर्तते न वा।
यदेवार्थक्रियाकारि तदेव परमार्थसत् ॥ [ ]

इति सौगतवृषस्यन्तीं प्रति पिङ्गवाग्भिरपि प्रस्तुतार्थः समर्थितः स्यादेव ॥

किञ्च, सत्त्वस्यानन्तधर्मात्मकत्वं भूयः प्रतिजानीते जिनैः। नन्वेकान्तनित्यानित्यस्य क्रमाक्रमाभ्यां ह्यर्थक्रियाकारित्वं न घटते। एकान्तनित्यानित्यो भावः क्रमेणार्थक्रियां कुर्यादक्रमेण वा? क्रमो हि पौर्वापर्यम्। पाकक्रियायामधिश्रयणादिका क्रिया पूर्वभागः। निष्पन्नमित्यपरभागः। तत्रैकान्तनित्यस्य पूर्वापरभागौ न घटेते। अवस्थाभेदतोऽनित्यताप्रसक्तेरिति। तावेकान्तानित्यस्यापि न युज्येयाताम्। पूर्वभागोऽपरभागं यावत् क्षणक्षयी न प्रतीक्ष्यते मङ्क्षु क्षीयते च। युगपदुभयोरपि न सिद्धिरिति तात्पर्यार्थः ॥

अनन्तधर्मात्मकत्वमिति स्याद्वादलक्षणम्। 'सदेव सत्' दुर्नीतिवाक्यम्। 'स्यात् सत्' नयवाक्यम्। 'सदिति घटः' प्रमाणवाक्यम्। घटोऽस्तीति न वक्तव्यं सन्नेव हि घटो यतः, सत्तायामपि सत्तायोगेऽनवस्था; नास्तीत्यपि न वक्तव्यः, विरोधात्, सदसत्त्वयोः प्रत्यक्षविरोधः।

सर्वमस्ति स्वरूपेण पररूपेण नास्ति च।
अन्यथा सर्वसत्त्वं स्यात् स्वरूपस्याप्यसम्भवः ॥ [ ]

एकस्मिन् भावे सत्त्वमसत्त्वं च, न विरोधः।
परस्परविरोधे हि न प्रकारान्तरस्थितिः।
नैकतापि विरुद्धानामुक्तमात्रविरोधिनी ॥
विरोधे चाविरोधे च प्रमाणं कारणं मतम्।
प्रतीयते चेदुभयं विरोधः कोऽयमुच्यते ॥ [ ]

नीलोत्पले यथा। नरसिंह इति भागे सिंहो नरो भागे, द्वयस्यैकार्थक्रियाकारित्वान्न विरोधः। अथ—

गुडो हि कफहेतुः स्यान्नागरं पित्तकारणम्।
द्वयात्मनि न दोषोऽस्ति गुडनागरभेषजे ॥ [ ]

तथा मेचकवस्तुष्वपि द्वयं न विरुद्धम्, सत्प्रमाणप्रसिद्धेरिति।

एकान्तनित्यो भावः कथं कार्यकारणतामश्नुते। एका कारणावस्थाऽपरा कार्यावस्था। कारणं त्रेधा समवायकारणम्, असमवायकारणम्, निमित्तकारणं चेति। प्राप्तानां प्राप्तिः समवायः, यथा घटे रक्तत्वादिरूपसमवायः। अप्राप्तानां प्राप्तिः संयोगः, यथा 'इह कुण्डे बदराणि'।

तत्र समवायकारणं घटोत्पत्तौ मृदादि, पटोत्पत्तौ तन्तवः। असमवायकारणं सूत्रखण्ड-दण्ड-चक्र-चीवरादि घटोत्पत्तौ, पटोत्पत्तौ तुरीवेमादि। निमित्तकारणं कुलालादि [घटे], पटे कुविन्द इति। अत्र कारणे कार्योपचारात् कारणं मृदादि कार्यं घटादि। कारणस्य कार्यं चेत् तदनित्यतापत्तिः। यत् कृतकं तदनित्यम्। तुल्यकालत्वे युगपच्चेत् किं कस्य कारणं किं कस्य कार्यमुभयोस्तुल्यकालत्वादङ्गुल्योरिव। एकान्तानित्यपक्षोऽपि क्षणक्षयित्वात् कथं कार्यकारणभावमासादयति। कारणापलापे कार्यमेवास्तीति चेत् तदुदितः यो यदनन्तरः कारणापेक्षया कार्यम्। कार्यं कारणमन्वेषयति। क्षणिकत्वे तावत् कारणं कार्यं यावन्न प्रतीक्षते। सौगतमते कारणमसत् कार्यमप्यसत्। कारणे विलीने कार्यं कमधिकृत्य प्रवर्तते। कार्यं तु कारणाधीनमेव। कारणाभावे कस्य कार्यमिति। क्रियत इति कार्यम्। अपेक्षितपरव्यापारो हि भावः स्वा(स्वो)त्पत्तौ कृतक इत्युच्यते। सापेक्षमसमर्थम्। कारणापेक्षं हि कार्यम्। कार्यकारणत्वे चार्थक्रियाकारित्वम्। तर्हे(र्ह्ये)वं कार्यं पर्यायरूपमनित्यम्। कारणं द्रव्यरूपं नित्यम्। अथेत्थमप्यनेकान्तमतं प्रसिद्धिसमाधिसौधमध्यमध्यास्ते॥

तथा चैकान्तनित्यानित्ययोः का गतिः? एकान्तनित्यवादी सांख्योऽनित्यपक्षे दोषलक्षमाख्याय प्रतिपक्षं सौगतमाक्ष(क्षि)पति नित्यपक्षगुणांश्च प्रकाशयति। एकान्तानित्यवादी बौद्धोऽपि स्वपक्षं सगुणं जल्पन्नेकान्तनित्यपक्षं सदोषं प्रतिजानानः सांख्यं पराकुरुते। तदेव(वं) कण्टकेषु परस्परध्वंसिषु सोऽयं नित्यानित्यगुणवाननेकान्तः परभाग सर्वोत्कर्षेण वर्तते। एवं सति ह्यनन्तधर्मात्मकता प्रणिगद्यमाना ह्यैव॥ तथाहि—

पयोव्रतो न दध्यत्ति न पयोऽत्ति दधिव्रतः।
अगोरसव्रतो नोभे तस्माद्वस्तु त्रयात्मकम्॥
घटमौलिसुवर्णार्थी नाशोत्पादस्थितिष्वयम्।
शोकप्रमोदमाध्यस्थ्यं जनो याति सहेतुकम्॥ [आप्तमीमांसा ५९-६०]

प्रध्वस्ते कलशे शुशोच तनया मौलौ समुत्पादिते
पुत्रः प्रीतिमवाप कामपि नृपः शिश्राय मध्यस्थताम् ।
पूर्वाकारपरिक्षयस्तदपराकारोदयस्तद्द्वया-
धारश्चैक इति स्थितं त्रयमयं तत्त्वं तथाप्रत्ययात् ॥

[ स्याद्वादमुक्तावली १. १८ ]

अपि च—स्याद्वादः प्रमाणस्वरूपम् । स्यादित्यव्ययमनेकान्तद्योतकम् । स्याता उपलक्षितः सदसन्नित्या[नित्या]भिलाप्यानभिलाप्यो वादः स्याद्वादः । तत्रायं-(त्रेयं) सप्तभङ्गी—स्यादस्त्येव सर्वमिति विधिकल्पनया प्रथमो भङ्गः । स्यान्नास्त्येव सर्वमिति निषेधकल्पनया द्वितीयो भङ्गः । स्यादस्त्येव स्यान्नास्त्येवेति क्रमतो विधिनिषेधकल्पनया तृतीयो भङ्गः । स्यादवक्तव्यमेवेति युगपद्विधिनिषेधकल्पनया चतुर्थो भङ्गः । स्यादस्त्येव स्यादवक्तव्यमिति विधिकल्पनया युगपद्विधिनिषेधकल्पनया [च] पञ्चमो भङ्गः । स्यान्नास्त्येव स्यादवक्तव्यमिति निषेधकल्पनया युगपद्विधिनिषेधकल्पनया च षष्ठो भङ्गः । स्यादस्त्येव स्यान्नास्त्येव स्यादवक्तव्यमिति क्रमतो विधिनिषेधकल्पनया युगपद्विधिनिषेधकल्पनया च सप्तमो भङ्गः ।

या प्रश्नाद्विधिपर्युदासभिदया बाधच्युता सप्तधा
धर्मं धर्ममपेक्ष्य वाक्यरचनाऽनेकात्मके वस्तुनि ।
निर्दोषा निरदेशि देव ! भवता सा सप्तभङ्गी यया
जल्पन् जल्परणाङ्गणे विजयते वादी विपक्ष क्षणात् ॥

ग्रन्थगौरवभयादत्रैतावदुक्तम् । विस्तरतः स्याद्वादरत्नाकरादवसेयम् ।

इति प्रमाणसारे प्रमाणस्वरूपप्ररूपकः स्वोपज्ञः प्रथमादर्शः

*

* *

अथ प्रमाणस्वरूपविप्रतिपत्तिहेतुं प्रदर्श्य प्रमाणसङ्ख्याविप्रतिपत(त्ति)-मुस(मुदस्य)न्ति। अथानेकान्तमतप्रामाण्यमभ्युपगम्य जितकाशी प्रत्युत प्रत्यवस्थान-पुरस्सरं परप्रतिवादिनं प्रतिवादी जैनः प्रतिजानीते—'ननु भो वादिन् ! प्राश्निः क्रियताम्' । परः —'कियन्ति प्रमाणनि' ? इत्युक्ते जैनः —'जिज्ञासाविष्करणं प्रश्न इति । ज्ञातुमिच्छा जिज्ञासा । अत्र ज्ञाते सति पृच्छाऽज्ञाते वा ? सुनिश्चिताशेषपदार्थपरमार्थस्य किमर्थं पृच्छा । अज्ञाते वा कः कृती कर्ममर्मविनाकृतेन वृथाप्रलापिना सम्यग्वाग्जन्मवैफल्यं नाटयति' । पर.—'मैवं भवदभिमतं मतं

विवेचयामः' इति चेत् तत्किं सामान्यलक्षणप्रश्नो विशेषलक्षणप्रश्नो वा ? न परः, को नामापक्रियमव्यवहारि सामान्यमाद्रियते । "भागा एव हि भासन्ते सन्निविष्ठा यथा तथा" इति । जातिः सामान्यं गोत्वं सर्वत्र । 'इयं कृष्णा गौः' इति दोहनक्रियायां तस्यामेवार्थक्रियाकारित्वं न तु सर्व[गत]जातौ । मैवम्, किं तत्र गवि स्वरूपसत्त्वं स्वीक्रियते न वा ? अजातित्वेन खुर-ककुदः(द् )सास्नालक्षणानड्डुहोऽपि दोहनप्रसक्तेः स्वरूपसत्त्वाभवात् । स्वरूपसत्त्वं चेत् तदेव सामान्यम् । तत्रैव सङ्ख्या-परिमाणादिविशेषा इति । निर्विशेषं हि सामान्यं प्रागुक्तयुक्त्याऽसिद्धमेव किं पिष्टपेषणं(णेन) । तत्र सामान्यतः प्रमाणलक्षणमुक्तम् । सम्प्रति विशेषत. प्रस्तुतमनुसन्धीयते ।

प्रत्यक्षं परोक्षं च द्वे प्रमाणे । सार्वज्ञ्यं ज्ञानं प्रथमं जानाति ततः पश्यति । अस्मदादिज्ञानं प्रथमं पश्यति ततो जानाति ।

आहुर्विधातृ प्रत्यक्षं न निषेधृ विपश्चितः ।
नैकत्व आगमस्तेन प्रत्यक्षेण प्रबाध्यते ॥ [ब्रह्मसि० तर्कपाद श्लो० १]

आगमप्रमाणं निषेधकम् , क्वापि विधायकम् । प्रत्यक्षं तु विधायकमेव, न निषेधृ । कोऽर्थः ? वैशेषिकमतमुद्दिश्य प्रत्यक्षमनुमानाधीनं चक्षुरादेः प्रकाशकं न तु ग्राहकम् । पूर्वानुभूतं तदाकारतया तदिष्टं साध्यं साधयतीति ।

प्रमाणेतरसामान्यस्थितेरन्यधियोगतेः ।
प्रमाणान्तरसद्भावः प्रतिषेधाच्च कस्यचिदिति ॥ [ धर्मकीर्ति ]

चार्वाका अपि प्रत्यक्षयोग्यार्थमात्रग्राहकां गिरं सगिरन्ते स्म । नास्त्यात्मा प्रत्यक्षप्रमाणातिक्रान्तत्वादिति । अक्षं अक्षं प्रति प्रत्यक्षमित्यव्ययीभावान्नियतनपुंस्त्व स्यात् । अक्षिशब्दादपि चेन्न चैवं स्पर्शनादिप्रत्यक्षं नैतच्छब्दवाच्यं स्यादिति । अतः अक्षमिन्द्रियं ततः प्रतिगतं प्रत्यक्षमिति सिद्धम् । तदिदं प्रत्यक्षस्वरूपस्य सवेदनस्य स्वाभाविकसामर्थ्यसङ्केतितार्थबोधबुद्धिशब्दाभ्यामनुमानाद्याधिक्येन विशेषप्रकाशन स्पष्टत्वम् ।

प्रत्यक्षमपि द्विप्रकारम् — सांव्यवहारिकं पारमार्थिकं च । तत्रेन्द्रियाऽनिन्द्रियनिमित्तं देशतः सांव्यावहारिकं प्रत्यक्षम् । तत्रेन्द्रियाणि विषयिणः पञ्च, स्पर्श-रस-गन्ध-रूप-शब्दाः [विषयाः] ।

स्पर्शन-रसन-घ्राण-श्रोत्राण्यन्येन्द्रियताबलात् ।
चक्षुरप्राप्यविज्ञातृ मनोवत् प्रतिपद्यताम् ॥ [ ]

अपराणीन्द्रियाणि प्राप्यकारीणि । यथा श्रोत्रेन्द्रियं शब्दपुद्गलं प्राप्यैवार्थं गृह्णीयादिति । तावच्चक्षुरप्राप्यकारि, अन्येन्द्रियबलत्वान्मनोवत् । अन्येन्द्रियासदृशं चेतस्त(त्त)स्मादप्राप्यकार्येव ।

अनिन्द्रियमनित्यमात्मपरिमाणं मनः । सांव्यावहारिकं मानसमपि प्रत्यक्षम् । परमते तु नित्यमणुपरिमाणं मन इति ।

चेतः सनातन[त]या कलितस्वरूपं
सर्वापकृष्टपरमाणुपवित्रितं च ।
प्रायः प्रियप्रणयिनीप्रणयातिरेका–
देतत् करोति हृदये न तु तर्कतज्ज्ञः ॥ [ ]

इत्यपि सटङ्कविटङ्क । पारमार्थिकज्ञाने कैवल्ये ह्यात्ममात्राधीनत्वादिति विभङ्गिप्रतिपातिज्ञानस्य संक्षिप्तत्वादेव मनसो नित्यता स्वानेऽपि दुर्लभा स्यादित्युत्तानार्थः ।

इन्द्रियानिन्द्रियनिमित्तमपि प्रत्यक्षं चतुर्धा —अवग्रहेहावायधारणाभेदादेकशश्चतुर्विकल्पम् । एकसामा(म)यिकः सत्तामात्रग्राहकोऽवग्रहः । विशेषाकाङ्क्षणमीहा । विशेषा(ष)निर्णयोऽवायः । स एव दृढतमावस्थापन्नो धारणा । ज्ञप्तौ हि क्रमोऽमीषामयमेवान्यथा प्रमेयाऽनवगतिप्रसङ्गः । सामान्यमात्रग्राही प्रथमसामयिको अर्थावग्रहः क्रमाविर्भूतापूर्वापूर्ववस्तुपर्यायप्रकाशकः स्यात् , संशयादिनिरासान्यथाऽनुपपत्तेः । क्वचिदवग्रहादीनामाशूत्पादाज्ज्ञानोत्पत्तिक्रमस्यानुपलक्षणं हि युगपन्नागवल्लीदलशतव्यतिभेदवच्चेति । सांव्यवहारिकं प्रत्यक्षम् ।

तत्र पारमार्थिकं चात्ममात्रापेक्षं प्रत्यक्षम् । तद् द्विविधम् - विकलं सकलं च । [विकलम्] अवधि-मनःपर्यायभेदात् । क्षेत्रावधि रूपिद्रव्यगोचरम् । भव-गुणप्रत्ययं ह्यवधिज्ञानम् । संयमविशुद्धेरुत्पन्नं मनोद्रव्यपर्यायालम्बनं मनःपर्यायज्ञानम् । सकलं तु द्रव्य-क्षेत्र-काल-भावसामग्र्या क्षपकश्रेण्युपशमश्रेणिभ्यां च क्षीणमोहगुणस्थानोदये ज्ञानावरणीयान्तरायमोहनीयासातावेदनीयकर्मप्रकृतिषु समूलकाषंकषितासु आयुर्नामगोत्रसातावेदनीयकर्मप्रकृतिषु दग्धरज्जुप्रायासु सत्सु करकलितामलकीफलवत् समस्तवस्तुपर्यायसाक्षात्कारिस्वरूपं केवलज्ञानम् ।

अत्र पुरुषविशेषप्रकृतयः — अधमाधमः, अधमः, विमध्यमः, मध्यमः, उत्तमः, उत्तमोत्तमः, इत्येताद्यग्विधविष्वड्यड्मति(?)विविधबुधसविशेषपुरुषविशेषस्य निःशेषिताशेषदोषस्य हि केवलित्वम् । आत्मनः केवलावस्थानमिति यावत् । तथा सति

कृतज्ञानावरणा(ण)विवरतिमिरव्यतिकरपरिक्षये सार्वज्ञ्यमेव। ननु पुरुषशेमुषीतारतम्य-योगतो ज्ञानतारतम्यं क्वचिद्विश्रान्तमेव। अत्र ताथागत. प्रत्यवतिष्ठते—

सर्वं पश्यतु वा मा वा तत्त्वमिष्ट तु पश्यतु।
तस्मादनुष्ठेयगतं ज्ञानमस्य विचार्यताम्।
कीटसङ्ख्यापरिज्ञानं तस्य न क्वोपयुज्यते॥
सर्वं (दूरं) पश्यतु वा मा वा तत्त्वमिष्टं तु पश्यतु।
प्रमाणं दूरदर्शी चेदेत गृध्रानुपास्महे॥ [प्र०वा० १.३३,३५]

अत्र सर्वदर्शित्वे सर्वज्ञत्वे च। तात्पर्यं हि सर्वगतपरिज्ञान भावादन्वयव्यतिरे-काभ्यां हेयोपादेयस्वरूपप्ररूपणमसङ्गतं वनीवच्यते। तद्वान् अर्हन् निर्दोषत्वात्; निर्दोषोऽयम्, प्रमाणाऽविरोधिवाक्त्वात्।

रागाद्वा द्वेषाद्वा मोहाद्वा वाक्यमुच्यते ह्यनृतम्।
यस्य तु नैते दोषास्तस्यानृतकारणं किं स्यात्॥ [ ]

इति विशेषार्थः। न च कवलाहारेण सार्वज्ञ्यं हीयते। ज्ञानं आधेयभूतम्। शरीरमाधा-रभूतम्।

देहो हि पुग्गलमओ आहाराईहि विरहिओ न भवे।
सिद्धा य अणाहारा सेसा आहारगा जीवा॥ [ ]

इत्याप्तोक्तेः। उत्पन्ने ज्ञाने विशदत्वमेव न तु इन्द्रियतृप्तिः। अशनायोदन्ययोराहा-रेणैव तुष्टिः। ज्ञानं ह्यात्मगुणः। आहारसञ्ज्ञा तु शरीरस्य। क्षुधोदन्ये हि वेदनामुत्पा-दयतः सातावेदनीयशेषमस्तीति च। अतो वेदनीयान्तर्भूते एते, नैव मोहनीयकर्मप्र-कृती। इति केवलिभुक्तिः।

स्त्रीवेदमर्जितं कर्म, स्त्रीपुंसावात्मकर्मक्षये हि मुच्येते। आत्मा ह्युभयत्र समान एवेति स्त्रीमुक्तिः।

महाव्रतिनां हि द्वेधा नयः—निश्चयो व्यवहारश्च। व्यवहारनयः समवसरणा-दिभिर्जिनैरपि स्वीकृतः। व्यवहारनये[न] हि प्रतिष्ठार्थं भवत्प्रव्रजितार्यादिभिर्वस्त्रप्राव-रणमाद्रियते, गुरुभिर्न [इति] कोऽयं गुरुशिष्यन्यायः। छद्मस्थैस्तु तीर्थकरातिशयस्पृहा तु स्वप्नेऽपि दुर्लभा। व्रीडापदं ह्युभयत्र समानमेवेति सिद्धा वस्त्रप्रतिष्ठा। इति प्रस्तावा-गताः प्रकटं दिक्पटा[:] परिचये पर्यनुयोज्याः।

अथ अस्पष्टं परोक्षम्। स्मरण-प्रत्यभिज्ञान-तर्कानुमानागमभेदतस्तत् पञ्चप्रकारम्। तत्र नैयायिकाः स्मरणज्ञानं प्रमाणाङ्गं नाभिमन्यन्ते। तन्मते ज्ञानमर्थजम्। स्मरणं त्वविद्यमानस्यैव पदार्थस्य तत्तत्संस्कारप्रबोधादुद्भूतमनुभूतार्थगोचरं तदित्याकारं स्मर-

इति । गुणपर्यायवद् द्रव्यम् । सहभाविनो गुणा', यथा आत्मनि ज्ञानविज्ञानादयः । क्रमभाविनः पर्याया', यथा आत्मनि नरनारकतिर्यगादय इति । द्रव्यापेक्षया य एव भावो नित्यः पर्यायापेक्षया स एवानित्य इत्यविरोध. । द्वे प्रमाणे —प्रत्यक्षं परोक्षं च । ज्ञानात् कर्मक्षये मोक्षः । मुक्ताः संसारिणो द्विविधा जीवा' । अवयवं(व)वाक्यमनुमानम् । सति कारणे कार्यम् । आत्मा कर्ता भोक्ता च । कर्मवादिनो जैनाः ॥

कर्मणः प्राधान्यं च । न हीश्वरः कर्ता भवितुमर्हति, कर्मापेक्षत्वे सति सामर्थ्यरहितत्वात् प्रकृतवत् । सृजेच्चेत् स्वार्थात् कारुण्याद्वा ? न पौरस्त्य', तस्य कृतकृत्यत्वात् स्वार्थः कश्चन नास्ति । न द्वितीयः, परदुःखप्रहाणेच्छा हि कारुण्यम्, अतः सर्वान् सुखिन एव सृजेत्, नो वा, मूकैडकुब्जजात्यन्धजातमात्रविपत्तिभागिभः कर्ममर्मवशगैः किमपराद्धम् ? अथ च तृणभ(त)रुपुरंदरधनुरम्भादीनामपि कर्तृपारवश्यं न संपश्यामहे । स कर्ता सशरीरो[ऽशरीरो] वा ? सशरीरश्चेत् कुलालकुविन्दादिवद् घटपटोत्पत्तौ दृश्यरूपतापत्तेरिति विशारुतालतालता लालग्यात् । अशरीरश्चेत् किं पिशाचादिवददृश्य इति ? तद्वच्चेत्तर्ह्यकिञ्चित्कर एव । अतो अनीश्वरं जगत् स्वस्वकर्मविपाकप्रादुर्भूतप्रभूतपुनर्भवत्वादिति सिद्धम् । दत्तः कर्तृवादाय जलाञ्जलि. ।

तत्र नैयायिका जटाधरविशेषा अक्षपादा. कर्तृवादिन । उर्वी-पर्वत-तर्वादिकं बुद्धिमद्धेतुकम्, कार्यत्वादिति । कार्यं घटादि । कारणं त्रेधा समवायकारणम्, असमवायकारणं निमित्तकारणं च । समवायकारणं मृदादि । असमवायकारणं सूत्र-खण्ड-दण्ड-चक्र-चीवरकुलालादि । निमित्तकारणं हीश्वर एव ।

"ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा ।
अज्ञो जन्तुरनीशोऽयमात्मनः सुख-दुःखयो. ॥" [महाभारत वन० ३०.२८]

इति ।

"सुखमात्यन्तिकं यत् तद् बुद्धिग्राह्यमतीन्द्रियम् ।
तं वै मोक्षं विजानीयाद् दुष्प्रापमकृतात्मभिः ॥" [ ]

"आनन्दं ब्रह्मणो रूपं तच्च मोक्षेऽभिव्यज्यते ।" [ ]

प्रत्यक्षमनुमानमागम इति प्रमाणत्रयम् । प्रतिज्ञा-हेतूदाहरणोपनय-निगमनान्यवयवाः पञ्चावयववाक्यम् ।

पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसीति नव द्रव्याणि । प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्तावयव-तर्क-निर्णय-वाद-जल्प-वितण्डा-हेत्वाभास-छल-जाति-निग्रहस्थानानां षोडशतत्त्वानां तत्त्वज्ञानान्निःश्रेयसाधिगम इति । षोढा सम्बन्धसन्निकर्षप्रमाणवादिनो नैयायिका. ।

अथ बौद्धा एकान्तानित्यवादिनोऽनधिगतार्थाधिगन्तृप्रमाणवादिनस्ताथागता योगाः शून्यवादिनो ज्ञानाद्वैतवादिनश्च।

ज्ञानिनो धर्मतीर्थस्य कर्तारः परमं पदम्।
गत्वाऽऽगच्छन्ति भूयोऽपि भवं तीर्थनिकारतः॥
इत एकनवते कल्पे शक्त्या मे पुरुषो हतः।
तस्य कर्मविपाकेन पादे विद्धोऽस्मि भिक्षवः॥
यथा यथा विचार्यन्ते विशीर्यन्ते तथा तथा।
यदेतत् स्वयमर्थेभ्यो रोचते तत्र के वयम्॥ [प्र० वा० २०९–२१०]

प्रपञ्चो मिथ्या प्रतीयमानत्वाद् मृगतृष्णाम्बुवत्। क्षणक्षयित्वाद्धि कार्यापोह एव। न तत्कारणमालक्तक इव भाविते कर्पासे रक्तता यथा, दग्धे रामले(ठे) परिमलो वा। क्षयस्वभावाः क्षणाः प्रतिक्षणं क्षीयमाना निरन्वयविनाशिनः क्षीयन्ते। परमन्वयरूपा वासना तिष्ठति। तयैव व्यवहारः स्यात्। अपि च गोत्वसामान्यमर्थक्रियाकारित्वाभावाद् व्यर्थम्। किन्तु व्यवहारिणो विशेषा एव। इयं कृष्णा गौ दोहनक्षमेति विशेषार्थता। प्रमाणद्वयम्—प्रत्यक्षमनुमान च।

धर्मकीर्तेरमी शिष्या भगवद्द्वेषधारिणः।
माने(मणि)पद्मे जपन्त्यन्नं पात्रप्राप्तमदन्ति च॥

तत्र साङ्ख्या कापिला एकान्तनित्यवादिनोऽमी।

साङ्ख्या निरीश्वराः केचित् केचिदीश्वरदेवताः।
सत्कर्मवादिनः केऽपि केचित् कर्तृत्ववादिनः॥
असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात्।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्॥ [सां० का० ९]
अतिदूरात् सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात्।
सौक्ष्म्याद् व्यवधानादभिभवात् समानाभिहाराच्च॥
सौक्ष्म्यात् तदनुपलब्धिर्नाभावात् कार्यतस्तदुपलब्धेः।
महदादि तच्च कार्यं प्रकृतिसरूपं विरूपं च॥ [सां० का० ७–८]

सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः। [सा० सू० १. ६१]

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः॥ [सां० का० ३]

अव्यक्तमेकम्, महदहंकारः पञ्चतन्मात्राणि [एकादशेन्द्रियाणि पञ्चभूतानि चेति] त्रयोविंशविधं व्यक्तम्।

णम्, यथा 'स देवदत्तः' इति 'तत् तीर्थङ्करबिम्बम्' च। ननु त्वन्मतेऽप्यनुमानमविनाभावभावितधूमधूमध्वजयोः पूर्वानुभवस्मरणादेव। प्रमाणमपि अनुमानम्। अप्रामाणिकस्मरणसदर्शितस्यानुमानाङ्गस्य स्वीकारः कथं युक्तियुक्त. स्यादिति ? परं पूर्वानुभूतसाधनादविद्यमानस्यैव साध्यस्य वह्निमत्त्वादेः परिज्ञानम्। तस्यापि कालान्तरे क्षेत्रान्तरेऽपि प्रत्यक्षीकरणार्हत्वाददोष। एवं तत्तत्संस्कारप्रबोधः साधनम्, पूर्वानुभवसवेदनं साध्यम्। सिद्धमनुमानाङ्गमिति।

तत्र प्रत्यभिज्ञानं ह्यनुभवस्मरणसाधनाद् यदभिज्ञानं शबलशाबलेयादिपरिणामसामान्यवृत्त्या सर्वत्र गोत्वविषयम् 'स एवाय जिनदत्त' इत्यादि। यथा चैत्राभिज्ञानात् मैत्रोऽपि साध्यते। वैशेषिकोपमान तु 'गोसदृशो गवयः' इति। तथा 'गोविसदृशो महिषः' इत्यपि स्यात्। नालिकेरद्वीपवासिनो हि द्वयमप्यप्रसिद्धमिति दुर्दुरूट(ढ)कण्टकोद्धारः।

तत्र तर्क ऊहाऽपरनामा विचार इति यावत्। कालत्रयवर्तिनोः साध्यसाधनयोरविनाभावसम्बन्धव्याप्त्या वाच्यवाचकविषयाविष्करणं 'इदमस्मिन् सत्येव भवति' इत्याकारं वेदन तर्क ऊह इति सज्ञान्तरं लभते। यतु(त्तु) ताथागता ऊहस्य प्रामाण्यं नोहांचक्रिरे, घटपटादिरित्यपोहमात्रम्, तेषामशेषशून्यत्ववादस्य निरवकाशत्वापत्तेः। आः किमिदमकाण्डकूष्माण्डाडम्बरोड्डामरमभिधीयते। तावच्छृणु श्रावयामि—तर्कस्तावदनुमानप्रमाणप्रामाण्यस्य प्राणाः।

प्रमाणेतरसामान्यस्थितेरन्यधियो गतेः।
प्रमाणान्तरसद्भावः प्रतिषेधाच्च कस्यचित्॥ [धर्मकीर्ति] इत्याहुः।

ऊहस्तावत्सामान्यविशेषात्मकवस्तुनः सम्बन्धालम्बनम्। तैस्तु प्रमाज्ञानविनाकृतैः पदार्थापोहः प्रोच्यते। अत एवायमलब्धपरमार्थः शून्यवादीति प्रसिद्धः। ऊहसिद्धिरित्यनुमानविशेषलक्षणम्। सामान्यलक्षणं तु साधनात् साध्यविज्ञानमनुमानं प्रसिद्धमिति॥

आगमो ह्याप्तवचनमाप्तिं दोषक्षयं विदु।
क्षीणदोषोऽनृतं वाक्य न ब्रूयाद्धेत्वसम्भवात्॥ [माठर, सा० का० ५] इति।

आप्तवचनादाविर्भूतमर्थसंवेदनमागमः उपचारादाप्तवचनं च। अभिधेयं वस्तु यथावस्थितं यो जानीतेऽवञ्चकः स आप्तः। स च द्वेधा—लौकिको लोकोत्तरश्च। लौकिको जनकादिः लोकोत्तरस्तु तीर्थकरादिः। इति कालत्रयप्रमातृप्रवक्तृप्ररूपितस्यागमस्य सिद्धिः। प्रमाणसङ्ख्याविप्रतिपत्तिरपास्ता।

अथ प्राचीनोत्तराकारपरित्यागोपादानेनानुगतप्रतीत्या तस्य विषयश्च सामान्यविशेषाद्यनेकात्मकं वस्तु हि, अर्थक्रियासामर्थ्यान्यथाऽनुपपत्तेः। सामान्यं द्विप्रकारम्—तिर्यगूर्ध्वतासामान्यभेदात् । गोत्व-साधारणजातित्वात् । विशेषोऽपि द्विरूपो गुणः पर्यायश्च । ज्ञानादिः सहभावी गुणः । सुखदुःखनरनारकादिः क्रमभावी पर्यायः । इति निरस्ता तद्विषय[वि]प्रतिपत्तिः ।

यत् प्रमाणेन साध्यते तदस्य फलम् । नैगम-सङ्ग्रह-व्यवहार-ऋजुसूत्र-शब्द-समभिरूढ-एवंभूताः सप्तनयाः । अस्य नयस्य फलं प्रमावत् । तद् द्विविधम् आनन्तर्येण पारम्पर्येण । किन्तु प्रमातृस्वरूपमेव फलम् । न प्रमातरि सत्तावादिनां विप्रतिपत्तिरिति सिद्धम् ।

इति प्रमाणसारे प्रमाणस्य सङ्ख्या-विषय-फल-विप्रतिपत्तिव्याषेधको
द्वितीयः परिच्छेदः ।

*

*   *

दर्शनव्यवस्थास्थापनार्थमिदमुपक्रम्यते । ननु खलु भोः ! शारदशशाङ्कसमुज्ज्वलयशसो विशारदा' सुभवद्भिर्भवद्भिर्वाचोयुक्तीनां धुरिभवद्भिरहरहः शास्त्राभ्यासः समातन्यते । तदिह प्रेक्षाचक्षुःसमक्षं साक्षेपं स्वपक्षे साधनं परपक्षे बाधनं कुर्महे महेच्छा[ः] ।

हं हो आदितस्तावन(त्) जैन-नैयायिक-बौद्ध-साङ्ख्य-वैशेषिक-जैमनीया इति दर्शनानि षट् । तत्र जैना अनेकान्तवादिनः । स्यादस्ति स्यान्नास्ति । स्यादित्यव्ययं ह्यनेकान्तद्योतकम् । एकस्मिन् सन्मुखवस्तुनि घटादावस्तित्वं नास्तित्वं चेत्यनेकान्तः ।

सर्वमस्ति स्वरूपेण पररूपेण नास्ति च ।
अन्यथा सर्वसत्त्वं स्यात् स्वरूपस्याप्यसम्भवः ॥ [ ]

इति । घटे घटत्वमस्ति । यदेवार्थक्रियाकारि तदेव परमार्थसत् । घटे च पटत्वं नास्तीति तत्रैव पटाभावो युक्त्याऽऽयातः केन निराकर्तुं शक्यते । अपि च नित्यानित्यत्वं परस्परविरुद्धमप्यनेकान्तयुक्त्या ह्येकस्मिन्नेव वस्तुनि उभयं समस्ति । यतः —

द्रव्यं पर्यायवियुत पर्यायाः द्रव्यवर्जिताः ।
क्व कदा केन सद्दृष्टा दृष्टा मानेन केन वा ॥ [ ]

पञ्चविंशतितत्त्वज्ञो यत्र तत्राश्रमे रतः ।
जटी मुण्डी शिखी वाऽपि मुच्यते नात्र संशयः ॥ [ ]

एषामाविर्भावतिरोभावौ कारणम् । नित्यः शब्दोऽकृतकत्वादाकाशवत् । यद्यदकृतकं तत् तन्नित्यं यथा सम्प्रतिपन्नम् । शब्दो हि ताल्वोष्ठपुटादिव्यापारैः सत्कारण एवाविर्भाव्यते न तूत्पाद्यते यथाऽपवरकान्तः संतमसे(सि) तिरोभूतः पदार्थसार्थः दीपप्रकाशेन प्रादुःक्रियते न तु जन्यते । यतोऽविद्यमानस्य वाजिविषाणस्यानुत्पत्तिरेव । न षष्ठस्य भूतस्यासद्रूपस्यैवाविर्भावः । भावानां विपत्तिस्तु कारणभावाभावात् तिरोभाव एव । भावाः सामग्रीसद्भावे प्रादुर्भवन्ति । आविर्भावाभावात् तिरोभवन्ति । कारणवादिनोऽमी । कार्यं हि कारणरूपमन्यथा वा । कारणं स्थिरैकरूपं चेद्विश्वं नित्यमेव । प्रत्यक्षमनुमानमागम इति प्रमाणत्रयम् । प्रकृतिवियोगो मोक्षः प्रवृत्तिस्वरूपाया विराम एव प्रकृतेः । प्रकृतिः करोति प्रकृतिश्च भुङ्क्ते । आत्मा दर्पणवत् प्रतिबिम्बमात्रफलं लभते ।

अथ वैशेषिकाः । द्रव्य-गुण-कर्म-सामान्य-विशेष-समवाया षट्पदार्थास्तत्त्वतयाऽभिप्रेताः । अर्थोपलब्धिहेतुः प्रमाणम् । प्रत्यक्षानुमानागमोपमानानि चत्वारि प्रमाणानि । तत्रोपमानं 'यादृग्गौस्तादृग्गवयः' ।

कीदृग्गवय इत्येवं पृष्टो नागरिकैर्यदा ।
वदत्यारण्यको वाक्यं यथा गौर्गवयस्तथा ॥

बुद्धि-सुख-दुःखेच्छा-द्वेष-प्रयत्न-धर्माधर्म-संस्कारा नवात्मगुणाः । सुखादिगुणसन्तानोच्छेदे मोक्षः । आत्मविशेषगुणानां सन्तानोऽत्यन्तमुच्छिद्यते, सन्तानत्वात् । यो यः सन्तानः स सोऽत्यन्तमुच्छिद्यते । अथैतान् विप्रतिपन्नाः संगिरन्ते – को हि नाम शिलाकल्पमपगतसुखसंवेदनमात्मानमुपपादयितुं यदे(ते)त । यतः —

वरं वृन्दावने रम्ये क्रोष्टृत्वमभिवाञ्छति ।
न तु वैशेषिकीं मुक्तिं गौतमो गन्तुमिच्छति ॥ [ ]

सामान्यविशेषवादिनोऽक्षपादा वैशेषिका जङ्गमकापालिकविशेषाः ।

भगवद्वेषधारिणो भाट्टाः प्राभाकरा ब्रह्माद्वैतवादिनो मीमांसकापरपर्यायाः सामान्यवादिनः । प्रमाणादिचतुष्टयं न स्वीकुर्वते । सर्वं ब्रह्मविवर्तमेवेति ।

एक एव हि भूतात्मा देहे देहे व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ [ब्र० वि० १२]
अद्वैतं परं(परमं) ब्रह्म नेह नानाऽस्ति किञ्चन ।

आरामं तस्य पश्यन्ति न तं पश्यति कश्चन ॥ [बृहदा० ४. ३.१४]

अशरीरा देवाः । चतुर्थ्यन्तं पदमिति देवताः यथा वषडिन्द्रायेति ।

अतीन्द्रियाणामर्थानां साक्षाद्द्रष्टा न विद्यते ।
नित्येभ्यो वेदवाक्येभ्यस्तत्त्वज्ञानार्थनिश्चयः ॥

वाग्व्यवहारार्थं प्राहुर्जैमनीयाः—

प्रत्यक्षमनुमानं च शब्दमुपमया सह ।
अर्थापत्तिरभावश्च षड् प्रमाणानि जैमिनेः ॥

प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते ।
वस्तुसत्तावबोधार्थं यत्राभावप्रमाणता ॥ [श्लो० वा० अभाव० १]

एतैः पञ्चभिः सत्तावादिभिः सर्वं ब्रह्मविवर्तमेव मन्यमानो गेहे नर्दितया खण्डनवादीऽप्रामाणिकः परार्ध्यैर्युयुत्सुराशामोदकतृप्त इव जैनेनापि वाक्चपेटया प्रोच्चाटनीयः ।

अथासद्दर्शनिनो नास्तिकाः परलोकात्ममोक्षापलापिनश्चार्वाका लौकायतिका बार्हस्पत्या विसदृशप्रत्यक्षैकप्रमाणवादिनो गिरं संगिरन्ते स्म—

एतावानेव लोकोऽयं यावानिन्द्रियगोचरः ।
भद्रे वृकपदं पश्य यद्वन्ति बहुश्रुताः ॥

पिब खाद च जातशोभने ! यदतीतं वरगात्रि ! तन्न ते ।
न हि भीरु ! गतं निवर्तते समुदयमात्रमिदं कलेवरम् ॥

किञ्च पृथ्वी जलं तेजो वायुर्भूतचतुष्टयम् ।
चैतन्यभूमिरेतेषां मान त्वक्षजमेव हि ॥ [षड्दर्शनसमु० ८१–८३]

किञ्च, नानाकारं जगत भ्रान्तिमात्रं मरुमरीचिकानिचयाम्बुवत् । पृथिव्यप्तेजोवायुरूपभूतचतुष्टयसमवायतश्चैतन्यं यथा धातुकीप्रसूनगुडद्रवसंयोगादुन्मादवत् । नास्तिकोऽसौ सर्वापलापी वृथाप्रलापी पापीयान् सर्वैरपि सत्तावादिभिः प्रभूभूय च सम्भूय कैमुतकन्यायेन जैनेनापि निर्वास्य इति । इति सिद्धः षड्दर्शनसमुच्चयतात्पर्यार्थः ।

श्रीमुनीश्वरसूरीन्द्रैः प्रोक्तस्तार्किकपर्षदि ।
मुनिहर्षमुनेरेष हस्तबाणः प्रमा[ण]तः ॥

इति प्रमाणसारे प्रस्तावागतदर्शनव्यवस्थास्वरूपप्ररूपकस्तृतीयः परिच्छेदः ॥ श्रीवृद्धगच्छालङ्कारसारवादीन्द्रचूडामणिकविसार्वभौमभट्टारकश्रीमुनीश्वरसूरिविरचितः प्रमाणसारग्रन्थः सम्पूर्णः ।[1]

---

१. प्रतौ प्रकरणान्ते श्लोकद्वयमस्ति । तद्यथा—

तत्त्वाना पञ्चविंश कलयति कपिल. षट्‌ पदार्थान् कणाद ।
श्रीसर्वज्ञो नवैव प्रकटयति पुन षोडशश्चाक्षपाद. ।
त्र्यैक व्याजराजो वदति मतिबली जैमिनिः कर्मषट्कं
बुद्धो ब्रूते द्विषट्कायतनमिद गी पति भूतवादी ॥१॥
चार्वाकोऽध्यक्षमेकं सुगतकणभुजौ सानुमानं सशाब्द
तद्द्वैत पारमर्षि सहितमुपमया तत् त्रय चाक्षपाद. ।
अर्थापत्त्या प्रभाकृद्वदति च निखिल मन्यते भट्ट एतत्
साभास द्वे प्रमाणे जिनपतिसमये स्पष्टतोऽस्पष्टतश्च ॥२॥
पुस्तिका लिखिता दु(मु)नी(नि)चन्द्रेणात्मार्थे लेखक[पाठक]योः शुभ भवतु ।

*

श्रीपद्मसुन्दरविरचितः

# प्रमाणसुन्दरः

## ॥ ॐ नमः स्याद्वादवादिने ॥

स्यात्कारमुद्रितानेकसदसद्भाववेदिनम् ।
प्रमाणरूपमव्यक्तं भगवन्तमुपास्महे ॥

सम्यक्स्वपरव्यवसायात्मकं ज्ञानं प्रमाणं प्रमाणत्वान्यथानुपपत्तेः[1] ॥
[2]द्विरूपं हि व्यवसायस्वभावसंवेदनम्—प्रवृत्तिरूपं निवृत्तिरूपं चेति । न चेत्थं स्वपरविषयतया मरुमरीचिकातोयादिवेदनस्यापि प्रामाण्यप्रसङ्ग । तथैवाव्युत्पन्नसंशयादेरपि न प्रामाण्यमसम्यक्त्वात् । ततोऽस्तु सुपरिच्छिन्नत्वेन[3] ज्ञानव्यक्तिषु सम्यक्त्वस्यैवोपपन्नत्वम् । न चेदमव्युत्पन्नसंशयादिनिवृत्तिरूपमेव नीरूपत्वापत्ते.[4] । नापि प्रवृत्तिरूपमेव स्वरूपादनैवाव्युत्पन्नसशयादिरूपेणापि तद्रूपत्वापत्तेः । व्यवसायस्य चाव्युत्पन्नसंशयादिना विरोधप्रसिद्धे. । तन्मुख्यतस्तु सुपरिज्ञातज्ञानस्यैव तत्र करणत्वम् । अचेतनस्य त्विन्द्रियलिङ्गादेस्तत्र करणत्वं वातायनादेः प्रकाशस्योपचारादेव 'अन्नं वै प्राणा' इत्यादिवत् । उपचारश्च तद्व्यवच्छित्तौ सुपरिज्ञातज्ञानस्येन्द्रियसहायतया प्रवृत्तेः ।

तथा सवेदनस्य द्विविधो विषय. – स्वरूपम्, अर्थश्चेति । तत्रोभयत्र तत एव[5] प्रमितिवि(र्वि?)श्वरूपत्वात्[7] । सवेदनं तु प्रकाशरूपमेवानन्यव्यवहितज्ञानस्वरूपेण

---

१ सम्यगिति अत्र च दग्धदहनन्यायेन यावदप्राप्तं तावद्विधेयमिति विप्रतिपन्नानाश्रित्य स्वपरेत्यादिकमव्युत्पन्नान् प्रति प्रमाण प्रमाणप्रमेयापलापिनस्तूद्दिश्य द्वयमपि विधेय, शेषं पुनरनुवाद्यम् । तत्र प्रमाणमिति प्राग्वत्, स्वमात्मा ज्ञानस्य स्वरूपम्, पर स्वस्मादन्योऽर्थ इति यावत, तयोर्व्यवसायो निश्चयस्तद् आत्मा यस्य तत् . ज्ञायते प्राधान्येन विशेषो गृह्यतेऽनेनेति ज्ञानम् । एतच्च विशेषणमज्ञानरूपस्य व्यवहारधुराधौरेयतामनादधानस्य सन्मात्रगोचरस्य स्वसमयप्रसिद्धदर्शनस्य सन्निकर्षादेश्चाचेतनस्य नैयायिकादिकल्पितस्य प्रामाण्यपराकरणार्थम तस्यापि च प्रत्यक्षरूपस्य शाक्यौ(शाक्यै) निर्विकल्पकतया प्रामाण्येन जल्पितस्य संशयविपर्ययानध्यवसायाना च प्रमाणत्वव्यच्छेदार्थं व्यवसायीति । स्पष्टनिष्टङ्क्यमानपारमार्थिकपदार्थसार्थलुण्टाकज्ञानाद्वैतवादिमतमत्यसितु परेति । नित्यपरोक्षबुद्धिवादिना मीमांसकानामेकात्मसमवायिज्ञानान्तरप्रत्यक्षज्ञानवादिनां यौगानामचेतनज्ञानवादिना कापिलाना च कदाग्रह निग्रहीतु स्वेति। ये केचनैवमङ्गीकुर्वन्ति चक्षु प्रमाणम् कस्मात्, प्रमाकरणत्वात्, तदयुक्तम् । चक्षुषा प्रमाकरणत्वाभावात् । प्रमाकरण तु प्रमाता भवति घटोऽपि भवति । अतो हेतो. प्रमाकरणत्वाभाव. । प्रमाणस्याप्यभाव स्वज्ञानाभावात् । यतो येन स्व न ज्ञायते तस्य परस्य ज्ञानमपि न भवति । अत. स्वपद युक्तमेव । चक्षुष. प्रकाशनं ज्ञान भवति न तु स्वप्रकाशनम् । येन ज्ञानेन स्वप्रकाशो जायते परप्रकाशो जायते तदेव ज्ञानं प्रमाणमिति । २ द्विभेदम् । ३ सुज्ञानत्वेन । ४ खरशिरसि विषाणवत् सर्वथा नोस्वभावत्वापत्तेः । ५. अनध्यवसाय । ६ संवेदनादेव । ७ व्यापकत्वात् ।

अथान्तरङ्गकार्मणकलङ्कविश्लेषविशेषोदयनिबन्धनः कश्चिदस्पष्टत्वापरनामा स्वानुभवसंवेद्यः प्रतिभासविशेषः परोक्षम्। तदपि द्विविधम्—अनुमानमागमश्चेति। अनुमानमपि द्विविधम्—गौणं मुख्यं चेति। तत्र गौणं त्रिधा—स्मरणं, प्रत्यभिज्ञानं तर्कश्चेति।

तदित्यनुभूतस्मृतिसङ्कलनात्मकं सामान्यविषयवेदनं स्मरणम्। तदिति प्राप्तिकाले तस्यासन्निपातादिति न मन्तव्यं प्रत्यक्षस्यैव स्मरणविषयस्य निक्षेपादेस्तद्विषयस्योपलम्भप्रतीतेः।

तिर्यगूर्ध्वतासामान्यविषयानुभवागमाद्याहितसंस्कारविशेषतया 'स एवायम्' इत्यादिज्ञानं प्रत्यभिज्ञानम्। तत्र 'गोसदृशो गवयः' 'तद्विसदृशो महिषः' इत्यादेरुपमानत्वान्न प्रत्यभिज्ञानमिति नानुमन्तव्यम्। तत्रेदमस्मादुन्नतमवनतमुपचितमणुदीर्घमित्यादेरुपमानत्वासम्भवाद् भवतु प्रत्यभिज्ञानम्। ततोऽन्याथा 'नीरक्षीरविवेचनचरणो मरालो', 'मधुव्रतः षट्चरणः', 'शिखण्डमण्डितः शिखण्डी' इत्यादिवाक्योपजनितसंस्कारस्य पुनस्तद्दर्शने स एवात्र मरालादिशब्दस्यार्थ इति वाच्यवाचकसम्बन्धपरिज्ञानस्योपमानवदप्रत्यभिज्ञानत्वे तु प्रमाणान्तरस्य चतुःप्रमाणीनियमव्याघातविधायिनः प्रसङ्गादुपमानस्यैव प्रत्यभिज्ञानेऽन्तर्भावो भवतादिति समाधिः। ततः सादृश्यादिना प्रागागमाद्यवगतस्य पूर्वापरानुसंधानानुविधैकसंवेदनसामान्यात्मकप्रत्यभिज्ञानतः प्रत्यभिज्ञानत्वस्यैवोपपत्तेरित्युपमानस्याप्येतल्लक्षणेनैव प्रामाण्यमिति।

तथेदमित्थमेव सम्भवति नानित्थमिति सर्वाक्षेपेण व्याप्तिपरिज्ञानात्मा तर्कः। न चास्य विकल्पात्मकत्वेन संशयादिवदप्रामाण्यम्। किञ्च, संदिग्धेऽर्थे न्यायः प्रवर्तते इति पारम्पर्यस्य सुवचत्वाद् विचारकत्वात् तद्वतः सर्वदर्शित्वापत्तेरिति। तथोक्तम्—"प्रत्यक्षादिप्रमाणानां तर्कोऽनुग्राहको भवेत्" इति; तथोदयनः "ऊहापरनामातिप्रसङ्गात्मा तर्कः" इति, तथा मनुः—

---

लक्षणमभिधानमुद्वहति। तथा यथा सकलघनपटलकुटकुट्याद्यावरणापगमे भानोरन्य एव स्फुटरूपः प्रकाशः स्यात् तथेहापि सकलमतिज्ञानाद्यावरणविलयेन तथाविधो मतिज्ञानादिसंजितः केवलज्ञानस्ये(स्यै)व स्फुटः प्रकाशो भवति। सर्वात्मना यथावस्थितवस्तुपरिच्छेदरूपः इत्यदोषः। अन्ये पुनराहुः सन्त्येव मतिज्ञानादीनि सयोगिकेवल्यादौ केवलफलत्वान्न विवक्ष्यन्ते यथा सूर्योदये नक्षत्रादीनि। केवलं शुद्धं च तदावरणमलपङ्कापगमात्। सकलं वा तत् प्रथमतयैव निःशेषतदावरणविगमतः संपूर्णोत्पत्तेः। असाधारणं चानन्यसदृशत्वात्। अनन्तं वा ज्ञेयानन्तत्वात् कालाद्वा। केवलं च तद् ज्ञानं च केवलज्ञानम्। इन्द्रियेभ्योऽतिक्रान्तं ज्ञानमतीन्द्रियम्। यद्वा इन्द्रियाणि अतिक्रान्तमतीन्द्रियम्।

"आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ॥" इति

अन्यथाऽनुमानादेरपि तथात्वप्रसङ्गात् । न चास्यानुमानत्वेनानवस्थापत्तिस्तदनुमानलिङ्गाविनाभावस्याप्यन्यस्मादनुमानादवगम इत्यपरापरस्यानुमानस्यापेक्षणात् ततोऽनुमानादन्यतम एवादसोयो विकल्पः प्रमाणयितव्य इति तर्कोऽनुमानाङ्गं प्रमाणमन्यथा लिङ्गस्य स्वसाध्याविनाभावनियमस्य ततोऽनवगमप्रसङ्गात् । ततोऽस्तु स्मरणादेरौपचारिकस्यानुमानस्य प्रामाण्यमेवं मुख्यस्यापीति ।

अथ मुख्यमनुमानमाह—तत्र साध्याविनाभावनियमलक्षणं साधनम्, ततो निश्चयलक्षणात् साधनादेव साध्यस्य शक्याभिप्रेताप्रसिद्धस्यैव यद् विज्ञानं तदनुमानमिति तन्निश्चयोऽविसवादादेवास्य स्ववेदनेषु प्रामाण्यव्याप्तत्वेन प्रतिपत्तेर्निश्चितव्याप्तिकादर्थादर्थान्तरप्रतिपत्तेश्चेति ।

अत्र तु बहिर्व्याप्तेरनुमानस्यान्तर्व्याप्तेरर्थापत्तेर्भिन्नप्रमाणत्वमिति न मन्तव्यम्, यतोऽग्रेऽस्या एवानुमानेऽन्तर्व्याप्तेर्गमकाङ्गत्वेन समर्थयिष्यमाणत्वात्; ततः 'पर्वतोऽयमग्निमान् धूमवत्त्वात्' इतिवत् 'अग्निरयं दाहशक्तिमान् दाहदर्शनात्' इतीदमप्यनुमानमेव नान्यदिति ।

अथ प्रत्यक्षादावनन्तर्भावादभावस्य प्रमाणान्तरत्वं घटाद्यभावेन प्रतीयमानत्वादित्यपि बालविलसितम् । तत्रापि प्रत्यक्षमेव प्रमाणं यतो घटाभावो नाम भूतलस्य कैवल्यमेव नापरोऽप्रतिवेदनात् । तत्रापि 'घटो नास्ति' इत्याकारस्यानुभूयमानघटाविशिष्टतयोपलभ्यमानतत्कैवल्यपरामर्शिनः प्रत्यभिज्ञानत्वेन तदनन्तर्भावानुपपत्तेः 'नास्त्यत्र घटोऽनुपलब्धेर्गगनतामरसवत्' इत्याकारस्याप्यनुमानेऽन्तर्भावान्न प्रमाणान्तरत्वमिति प्रमाणपरिमाणनियमः ।

तत्र त्रैरूप्यं पाञ्चरूप्यं[1] वा हेतोर्लक्षणमित्यपि बालविलसितम्, तदाभासेऽपि सम्भवात्। पक्षधर्मत्वंागमकत्वम् यथा 'उदेष्यति शकटं कृत्तिकोदयात्' तदभावश्च शकटे धर्मिण्युदेष्यत्वे साध्ये कृत्तिकोदयस्य हेतोरभावात् । कालस्य मुहूर्तधर्मित्वे चेत् तर्हि 'भूतलं पर्वताग्निमद् अयस्कारकुटीरधूमत्वात्' इत्युभयगर्भविस्तारिणो भूतलस्य धर्मित्वेन हेतो. पक्षधर्मतोपपत्ते. । सपक्षे सत्त्वमगमकम्, यथा विनैनमपि केवलव्यतिरेकिणो

१ पक्षधर्मत्वम् १ सपक्षे सत्त्वम् २ विपक्षाद् व्यावृत्ति ३ अबाधितविषयत्वम् ४ असत्प्रतिपक्षत्वम् ५ चेति । २ हेतोर्य पक्षेन सम्बन्ध. पक्षे व्याप्यवृत्तित्व तत् पक्षधर्मत्वम् ।

बोधकत्वात् । सवेदनबहिर्भावी नीलादिरेवार्थो नीलाद्यर्थस्तु कदाचिदप्रकाशोऽपि परापेक्षबोध्यत्वेन । ततस्तस्यार्थत्वम् । तर्हि सूक्तम् — प्रमेयाव्यभिचारित्वं प्रमाणत्वं संवेदनस्यैव स्वपरप्रकाशतया प्रतपमानस्यैव तद्विषयप्रकाश्यार्थस्य प्रत्यक्षीकरणात् । ततोऽत्र प्रमातृ-प्रमाण-प्रमेय-प्रमिति-कर्तृ-करण-क्रिया-फलादीनां कथञ्चिद् भेदाभ्युपगमात् कार्यकारणभावाविरोधोऽप्यनुमन्तव्य । ततोऽर्थधर्ममाहात्म्यादात्मा स्वतन्त्रस्वरूप प्रमाता, करणसाधनं प्रमाणम्, तद्धर्माधारत्वं प्रमेयम्, सम्यक्स्वपरपरिच्छित्तिः प्रमितिः, साधकतमस्वभावं कर्तृभावसाधनं करणम्, स्वार्थनिर्णीतिस्वभावा क्रिया, तन्निश्चय. फलमित्यादि कथञ्चिद् धर्मभेदेऽप्यभेद. प्रतिपत्तव्य. । तत्रोदाहरणम्— यथा करतलामलकमहमात्मा आत्मानमात्मना वेद्मीत्यादित्रदित्येवंसाध्याविनाभावित्वनिर्णीतो हेतुरसाधारणधर्मो भावस्य लक्षणमव्यभिचाराद्ग्नेरौष्ण्यवत् ।

इति श्रीप्रमाणसुन्दरप्रकरणे लक्षणखण्ड प्रथमः ।

*

* *

तच्च प्रमाणं द्विविधम्—प्रत्यक्षं[1] च परोक्षं[2] च । तत्र यत् स्पष्टावभासं तत् प्रत्यक्षम् । यदन्त.कार्मणमलविश्लेषविशेषनिबन्धनो विशुद्धिविशेष एव स्पष्टत्वम् । तथोक्तम्—

इदमित्यादि यज्ज्ञानमभ्यासात् पुरत. स्थिते ।
साक्षात्करणनस्तत्र प्रत्यक्षं मानसं मतम् ॥

ततोऽभ्यासदशाया परामर्शकत्वेन स्पष्टत्वं मानसप्रत्यक्षमेव । प्रत्यक्षस्यापि स्पष्टत्वं स्वानुभवनेन तथैवान्वीक्षणादिति ।

तत् प्रत्यक्षमपि द्विविधं—सांव्यवहारिकं मुख्यं च । तत्राद्यं द्विविधं—इन्द्रिप्रत्यक्षमनिन्द्रियप्रत्यक्ष चेति । तत्रेन्द्रियस्य चक्षुरादे. कार्यं यद् बहिर्नीलादिविषयसंवेदनं तदिन्द्रियप्रत्यक्षम् । तत्रापि शक्तिनियमादेव विषयनियम । संवेदनस्य नियतशक्तिका हि संवित्तय. स्वहेतुसामर्थ्यादुपजायन्ते जन्मिनामिह । स्वनियतार्थग्रहणलक्षण भावेन्द्रियस्वभावाया योग्यताया एव साधकतमत्वादनुपचरितप्रमाणं ज्ञानमेव प्रत्यक्षम । सुखादे. स्मरणादिज्ञानस्य च स्वरूपवेदनमनिन्द्रियप्रत्यक्षम् । अनिन्द्रियमिह तु न पौद्गलिकं मन प्रतिपत्तव्य किञ्च(किन्तु) क्षयोपशमविशेषाध्यासितः कश्चिदात्मप्रदेशविशेष एवानिन्द्रियम् । तत् पुनर्द्विभेदमपि प्रत्यक्षं प्रत्येकमवग्रहेहावाय-

---

१ अश्नुते अश्नोति वा व्याप्नोति सकलद्रव्यक्षेत्रकालभावान् इति अक्षो जीवोऽश्नुते विषयमिति अक्षम इन्द्रियं वा । अक्षमक्ष प्रति गत प्रत्यक्षम् । इन्द्रियाण्याश्रित्य व्यवहारसाधकं यज्ज्ञानमुत्पद्यते तत् प्रत्यक्षमित्यर्थ । २ अक्षाणा परं परोक्षम्, अक्षे च परतो वर्तत इति वा ।

धारणाभेदाच्चतुर्विधम् । तत्र विषयविषयिसन्निपातानन्तरभाविसत्तादर्शनपुरस्सरो मनुष्यत्वाद्यवान्तरसामान्याध्यवसायिप्रत्ययः समयमात्रनियतोऽवग्रहः । तदवगृहीतविशेषस्य यज्ञदत्तेन भाव्यमिति भवितव्यतामुल्लीखन्ती प्रतीतिरीहा । ईहितविशेषस्य यज्ञदत्त एवायमित्यवधारणात्मकोऽध्यवसायोऽवायः । निर्णीतस्यैव कालान्तरस्मरणयोग्यतया ग्रहणं धारणा । भवितव्यताविशेषकाङ्क्षाप्रतीतावीहायाः संशयाद् भेदः । यथास्वकालानतिक्रमेण यथाक्रमोत्पादाद् मतिविशेषभेदादेषां कथञ्चित् स्वरूपभेदः । तदेषामवग्रहादिमतिविशेषत्रि(पवि)कल्पानां पूर्वपूर्वस्य प्रमाणत्वमुत्तरोत्तरस्य च तत्फलं(फलत्वं) प्रतिपत्तव्यम् । ततः सूक्तम् —"प्रमाणस्य फलं साक्षात् प्रसिद्धिः, स्वार्थविनिश्चयश्च पारम्पर्येण निर्वाणाद्यधिगमः" इति । सांव्यवहारिकं प्रत्यक्षं व्याख्यातम् ।

मुख्यं तु प्रत्यक्षमतीन्द्रियम् । तच्च यथास्वसामग्रीविशेषविश्लेषित[3]तत्तदावरणमतीन्द्रियं मुख्यं प्रत्यक्षम् । तदपि द्विविधम्—विकलं सकलं च । तत्राद्यं द्विविधम् [4]अवधिमनःपर्यवै[5]श्च । तत्रावधिज्ञानावरणवीर्यान्तरायक्षयोपशमविशेषाविर्भूत(तं) रूपिद्रव्याधिकरणभावविषयं भवगुणप्रत्ययविशेष(षं) विशदमवधिज्ञानम् । चरणगुणप्रादुर्भूततदावरणवीर्यान्तरायक्षयोपशमविशेष(ष) विशदं मनोद्रव्यपर्यायविषयं मनःपर्यवज्ञानम् । सकलं तु प्रत्यक्षं प्रक्षीणाशेषानाद्यविद्याकन्दायमानघातिमलकलङ्कोज्जृम्भमाणनिरतिशयवैशद्यतादात्विकप्रतपनाक्रान्तसकलभूतभविष्यद्वस्तुवास्तवयाथातथ्यपरिणमनविषयाव्यवधानं केवलज्ञान[6]म्, व्याख्यातं चेद सकलं मुख्यमतीन्द्रियप्रत्यक्षम् ।

इति प्रमाणसुन्दरप्रकरणे प्रत्यक्षखण्डः द्वितीयः ॥

*

*    *

---

१. वस्तु । २. इन्द्रियसंयोग. । ३ वियोजित । ४ अवधानमवधिरिन्द्रियाद्यनपेक्षमात्मनः साक्षादर्थग्रहणम् । अत एवेद प्रत्यक्षज्ञानम् । यद्वाऽधोऽधो विस्तृत वस्तु धीयते परिच्छिद्यतेऽनेनेति अवधि । ५. परि सर्वतो भावेऽवनं वेदन परिअव. पर्यव, मनसि पर्यवो मन पर्यव. सर्वतस्तत्परिच्छेद इत्यर्थ । यद्वाऽऽत्मभिर्वस्तुचिन्तने व्यापारितानि मनासि पर्येति अवगच्छतीति मन-पर्याया(यव)म् । ६ केवलमेक मत्यादिज्ञानरहितत्वात् । आह—यदि मत्यादीनि ज्ञानानि स्वस्वावरणक्षयोपशमभावेऽपि प्रादु षन्ति ततो नि शेषत स्वावरणक्षये सुतरा भवेयु चारित्रपरिणामवत्, तत्कथ तेषा तदानीमभाव ? उच्यते—यथा भानोर्घनान्तरितस्यापान्तरालावस्थितकटकुड्यावरणविवरप्रविष्टप्रकाशो घटपटादीन् प्रकाशयति तथा केवलावरणावृतस्य केवलस्यापान्तरालमतिज्ञानावरणादिक्षयोपशमरूपविवरनिर्गत प्रकाशो जीवादीन् प्रकाशयति । स च तथा प्रकाशयन् मतिज्ञानमित्यादि-

गमकत्वात् 'सकलं जीवच्छरीरं सात्मकं प्राणादिमत्त्वाद् व्यतिरेके भस्मवत्' इति। विपक्षासत्त्वमगमकम् यथा 'सर्वमनेकान्तात्मकं सत्त्वात्' इत्यस्य स्वसाध्यप्रत्यायनसमये निरूपयिष्यमाणत्वादिति। न च त्रैरूप्यसाकल्यं गमकम्, 'पक्वान्येतानि फलानि एकशाखाप्रभवत्वादुपभुक्तफलवत्' इत्यादौ। पाञ्चरूप्यस्याप्यगमकत्वम्, तथा 'मूर्खोऽयं देवदत्तस्तत्पुत्रत्वादितर[त]त्पुत्रवत्' इत्यादावप्येकशाखाप्रभवत्वस्याप्यबाधितविषयत्वासम्भवादामताग्राहिप्रत्यक्षेणैव तद्विषयस्य बाधितत्वात् तत्पुत्रत्वादेश्चासत्प्रतिपक्षत्वाभावात् तत्प्रतिपक्षस्य शास्त्रनिष्णात(ता)दिलिङ्गस्य सम्भवादिति। ततः साध्याविनाभावनियमलक्षणस्यैव तत्त्वोपपत्तेः पक्षधर्मत्वाद्यभावेऽपि, 'सन्ति प्रमाणानीष्टसाधनात्' इत्यादौ तस्यैव भावादित्यग्रे निरूपणात्।

न च तथागतमतकल्पितं स्वभावकार्यानुपलब्धिलक्षण लिङ्गं त्रिविधम्। अविनाभावनियतं लिङ्ग घटामञ्चति। रसादे रूपादावतत्स्वभावादेरपि गमकत्वात्। न हि रसादेः रूपादिस्वभावत्वम्, तस्य भेदेन प्रतिपत्ते, नापि तत्कार्यत्वं समसमयत्वात्, अथ पारम्पर्येण चेत् तर्हीन्धनस्यापि पावकजन्मनो[२] धूमकार्यत्वेन, तल्लिङ्गत्वोपपत्तेः। अथ रसादिकारणाद् रूपादेरवगम इति सति कारणस्य लिङ्गत्वानभ्युपगते स्वभावलिङ्गत्वोपगमे धूमादेरपि तत एव तल्लिङ्गत्वप्रसङ्गेन कार्यलिङ्गस्याभावानुषङ्गान्न रसादेः कार्यस्वभावयोरन्तर्भावः, न चानुपलब्धौ विधिसाधनत्वात् इति न लिङ्गस्य त्रैविध्यम्। नाप्यन्वयादित्रयं लिङ्गम् 'सन्ति प्रमाणानीष्टसाधनात्' इत्यस्यागमकत्वप्रसक्तेः, नह्यसावन्वयी व्यतिरेकी तदुभयी वा साधर्म्यादेरभावादिति, न चासावगमकोऽप्यग्रे निरूपणात्। नापि सयोगिसमवाय्येकार्थसमवायितद्विरोधिचतुष्टयं तल्लिङ्गम्। तत्र कृत्तिकोदयस्य शकटोदयादौ, धूमस्य पावकादौ इव संयोगाभावान्न संयोगि, नापि गोरिव विषाणादिः समवायि, नापि रूपादिनेव रसादिरेकार्थसमवायि, नापि तद्विधिलिङ्गत्वात् तद्विरोधि। तन्न त्रैविध्यादिकल्पनं लिङ्गम्, अतन्नियतस्यापि साध्याविनाभावनियमविषयस्यानेकस्ये(स्यै)व भावात्।

तदनुमानमपि द्विधा—स्वार्थं परार्थं चेति। तद्विषयेऽपि स्वार्थप्रकाशनहेतुक्षयोपशमयोग्यताविशेषः प्रतिपत्तव्यः। ततो योग्यताविशेषात् तर्कनिर्णीताविनाभावेन साध्यविज्ञानं स्वार्थम्। तत्र साध्यमिष्टमबाधितमसिद्धमिति। तत्र वाद्यभिप्रायेच्छया विषयीकृतमिष्टं यथा 'शब्दः कथञ्चिद् अनित्यो जैनस्य न सर्वथा'। अबाधितं तु प्रत्यक्षानुमानादिभिः, 'अश्रावणात्'इति प्रत्यक्षबाधितं न तथा। असिद्धपदं तु सन्दिग्धविपर्यस्ताव्युत्पन्नानां साध्यत्वायेति प्रतिवाद्यपेक्षयासिद्धं प्रतिपाद्यत्वात्, तस्याविज्ञातार्थ-

१ अस्त्यत्र निंबुके रसः रूपादिति। २ पावकस्य जन्म यस्मात् स।

स्वरूपत्वाद्, वादिनस्तु [सिद्धं] प्रतिपादकत्वात्। न चाविज्ञातार्थस्वरूपः प्रतिपादको नामातिप्रसङ्गादिति। क्वचिद् व्याप्तिसमये साध्यं धर्मो नित्यत्वादिः, प्रयोगसमये तु साध्यधर्मेण विशिष्टो धर्मी पक्षः। तत्प्रसिद्धिर्विकल्पप्रमाणाभ्यां द्वयेनैकेन वा, तत्र व्याप्तौ तु साध्य धर्म एव न पुनर्धर्मी ततोऽन्यथा तदघटनादनेन हेतोरन्वयासिद्धेः। न हि यत्र यत्र कृतकत्वं त[त्र] तत्र शब्दानित्यत्वाद्यन्वयोऽस्ति। तत्र साध्यसाधनयोर्व्याप्यव्यापकयोर्नियताविनाभावो व्याप्तिस्ततोऽनुमानम्। तत्प्रभेद चेच्छताऽविनाभाव एव व्याप्यस्य प्रधानलक्षण प्रतिपत्तव्यम्। सोऽपि सहभावनियमः क्रमभावनियमश्चाविनाभाव इति। तत्र सहचारिरूपरसादिलक्षणयोर्व्याप्यव्यापकयो शिंशपात्व-वृक्षत्वादिधर्मयोः सहभावः, पूर्वोत्तरचारिणो कृत्तिकाशकटोदयादिधर्मयोः, कार्यकारणयोरग्निधूमादिस्वरूपयोर्वा क्रमभाव इति। तर्कतस्तन्निर्णयः।

साध्यसाधने तद्विमर्शिवचनोद्भूत परार्थानुमानम्। तद्वचनमपि तदर्थहेतुत्वादुपचारत' प्रमाण मुख्यतस्तु ज्ञानमेवेति। तत्र हेतुप्रयोगो द्विविध' — तथोपपत्तिरन्यथानुपपत्तिश्चेति। यदिदं साधनत्वाभिप्रेतं वस्तु अस्मिन् साध्यत्वाभिप्रेने सत्येवाग्नावेव धूमो भवतीति तथोपपत्तिः, साध्यमन्तरेण न भवत्येव [इति] अन्यथानुपपत्ति। साकल्यव्याप्तित्वेनास्याप्रामाण्याभावः। तत्रापि हेतोरन्तर्व्याप्त्या साध्यसिद्धौ बहिर्व्याप्तिप्रयोगो वन्ध्य एव। पक्षीकृत एव विषये साधनस्य साध्येन सह व्याप्ति' 'अनेकान्तात्मक सर्वं सत्त्वात्' इतिवद् अन्तर्व्याप्तिरन्यत्र बहिर्व्याप्तिरिति। तथैकहेतो पक्षधर्मत्वाद्यनेकधर्मात्मकत्वेऽनेकान्तसमवतारो दुर्निवार एव। ततोऽनेकान्तात्मकस्य साध्याविनाभावनियमलक्षणस्य व्याप्यत्व पक्षधर्मत्वादेर्व्यापकत्वम्। तत. पदार्थान्तरानुवृत्तव्यावृत्तरूपमात्मानं बिभ्रदेकमेवार्थस्वरूपं प्रतिपत्तुर्भेदाभेदप्रत्ययप्रसूतिनिबन्धन हेतुतयोपादेयं साध्यसिद्धिनिबन्धनमभ्युपेयम्।

तत्र पक्षः प्रतिज्ञावचनमागम एव, हेतुरनुमानम्, प्रतिज्ञातार्थस्य तेनानुमीयमानत्वाद द्वयमेवानुमानम्। मन्दमतिप्रतिपत्त्यर्थं प्रतिव्यक्तिरूपो दृष्टान्तो द्विधा—साध-

---

१. पक्ष साध्य.। २ धर्मिण एव साध्यत्वे। ३ व्याप्तेरघटनात्। ४ व्यप्तौ एक व्यापकम् एक व्याप्य भवति। तत्रोभयोर्मध्ये यदधिकवृत्ति तद्व्यापकम्। यच्चाल्पवृत्ति व्यापकेन सहाविनाभूत तत् व्याप्यम्। यथा धूमानुमाने वह्निर्व्यापकम्, धूमो व्याप्यम्, यतो यत्र यत्र वह्निस्तत्र तत्र धूम इति नास्ति अङ्गारावस्थाया वह्निसद्भावे, वह्नि सर्वत्राप्यस्त्येव तेन वह्निरधिवृत्तित्वाद् व्यापक धूमश्चाल्पवृत्तित्वाद् व्याप्यम्। उक्त च—

व्यापक तदतन्निष्ठ व्याप्यं तन्निष्ठमेव च।
व्याप्य गमकमादिष्ट व्यापक गम्यमिष्यते॥

५ साधर्म्यवैधर्म्य। ६. हिनोति गमयति जिज्ञासितधर्मविशिष्टान् अर्थान् इति हेतु।

म्यवैधर्म्याभ्यामिति । तत्राद्यो वह्नौ साध्ये महानसादिः । साध्याभावे साधनवैधर्म्ये वैधर्म्यदृष्टान्तस्तत्रैव महाह्रदादिः । उपनय उपमानम् । सर्वेषामैक्यविषयप्रदर्शनं निगमनमिति[1] त्र्यवयवी बालव्युत्पत्तये नानर्थिका, वादेऽस्या अनुपयोगात् पक्षहेतुभ्यामेव साध्यसिद्धेरिति । ततः साध्यप्रतिपित्सुना हेतुप्रयोगवत् पक्षप्रयोगोऽभ्युपेय इति ।

तत्र साध्याविनाभावनियमलक्षणो हेतुः साधनम् । तद् द्विधा—विधिसाधनं प्रतिषेधसाधनं चेति । तत्र विधिरुपलब्धिः, प्रतिषेधोऽनुपलब्धिः, तयोः साधनम् । यथा साध्यसाधनयोर्व्याप्यव्यापकभावो विधेरुपलब्धौ साध्ये गमकत्वं तथाऽनुपलब्धावपि, प्रतिषेधादपि यथाऽनुपलब्धौ गमकत्वं तथोपलब्धावपीति ।

तत्र विधिसाधनं द्विधा—धर्मिणस्तद्विशेषस्य चेति । तत्र धर्मिणो यथा 'सन्ति बहिरर्थाः साधनदूषणप्रयोगात्' । तत्र साधनं नीलादेः संवेदनत्वसमर्थनम्, दूषणं बहिरर्थनिषेधनम्, तयोः प्रयोगः प्रकाशनम्, तद्यथा 'नीलादिः संवेदनादव्यतिरिक्तस्तद्वेद्यत्वात् स्वरूपवत्', तथा दूषणं 'न जडो नीलादिः प्रतिभासमानत्वात् सुखादिवत्' । तथेदमन्यत् 'सन्ति प्रमाणानि, इष्टसाधनात्' इति । न हि प्रमाणनिरपेक्षमिष्टस्य विभ्रमैकान्तादेः[2] साधनमुपपन्नमिष्टसाधनस्य प्रमाणसद्भावाविनाभावितया निर्णयात्, प्रमाणनिरपेक्षे हि तत्साधने स्यादतिप्रसङ्गः । ततः प्रयोगस्य बहिरर्थविशेषत्वं शब्दरूपत्वादेवाभ्युपेयम्, विभ्रमादेरुपायादर्शनात् पारिशेष्यप्रमाणेन तद्विपर्ययस्यैव व्यवस्थापनमिति । धर्मिविशेषसाधनं द्विधा-धर्मिणोऽनर्थान्तरमर्थान्तरं चेति । अनर्थान्तरमपि द्विधा—सपक्षेण विकलमविकलं चेति । तत्राद्यं यथा 'सर्वमनेकान्तात्मकं सत्त्वात्' इति सत्त्वं सामर्थ्येन[3] व्याप्तमसमर्थाद् गगनाम्भोरुहादेः सत्त्वस्य व्यावृत्तेः, सामर्थ्यस्य चैकत्वे तु न ततः प्रदीपादिसम्बन्धिनः कज्जलमोचनतैलशोषवर्त्तिकादाहोर्ध्वज्वलनस्वपरप्रकाशनतमःस्फेटनस्फोटादिकरणानुवृत्तिप्रत्ययोत्पादनप्रदीपान्तरकरणादिकार्यम्, अनेकत्वे च कथं न भावस्यानेकान्तात्मकत्वम् । तत्र, कथमेकस्यानेकान्तत्वम् [4] विरोधादिति नानुमेयम्, यदनेकस्वरूपाया बुद्धेरनेकान्तमनिच्छतामसम्भवात्, विरोधसंशयादिप्रतिक्षेपस्याग्रे निरूपणात्, न चाप्यनवस्थादिदोषोऽनादित्वात् तत्प्रबन्धस्य, नापि केवलस्वभावात् कार्यानेकत्वं तदन्यथानुपपत्तेर्नियमवत्तया स्वहेतोरेव तथाविधात् तद्रूपेणोत्पत्तेरिति[5] युक्तं सर्वस्यानेकान्तात्मकत्वं सत्त्वं चेति । तत्र सपक्षाविकलमपि

१. निगम्यते निर्धार्यते पक्षे साध्यमनेन वचनेनेति निगमनम् । २. विभ्रमैकान्तादि । ३. सामर्थ्यं नाम स्वार्थक्रियाकारित्वम् । ४. कारणस्यानेकान्तत्वाभावे कार्यमपि अनेकान्तात्मकं न स्यादेव । ५. कार्यानेकत्वप्रयोजकत्वं ।

द्विधा—सपक्षस्य व्यापकमव्यापकं चेति । व्यापक यथा 'अनित्यः शब्दः कृतकत्वात् घटवत्' इति । सपक्षव्यापकत्वं चास्य घटवदनित्ये सर्वत्र विद्युद्वत् कुसुमादावपि भावात् । तदव्यापकं यथा 'शब्दोऽनित्यः प्रयत्नान्तरीयकत्वाद् घटवत्' इति । तस्य तत्त्व[1] घटवदनित्येऽप्यन्यत्र जलधरध्वानादावभावात् प्रयत्नस्य तु पुरुषधर्मत्वादिति । धर्मिणो भिन्नमपि लिङ्गमनेकधा—कार्यं, कारणम् , अकार्यकारणं चेति । तत्र कार्यं धूमः पर्वतादौ पावकस्य; व्याहाराकारविशेषग्रहो तात्वादिसहायस्यैवात्मनो व्यपाराभ्युपगमे, घटाद्युत्पत्तौ चक्रादिसहायस्य कुम्भकारादेर्व्यापारवत्त्वादिति कथमन्यथा घटादेरप्यात्मकार्यता । कार्यकार्यादेरपि कार्यहेतावेवान्तर्भाव' । कारणलिङ्गं यथा 'अस्त्यत्र छाया छत्रात्, मेघोन्नतिविशेषो वर्षणस्याभ्यवहारविशेषश्च तृप्ते.' इति । कारणकारणादेरप्यत्रान्तर्भाव' । अकार्यकारणं लिङ्गं द्विधा साध्येन समसमयम् विभिन्नसमयम् । तत्राद्यं रसादिः रूपादे'; शरीराकारविशेषो वा जीवस्य । प्रतिपद्यन्ते हि गाढमूर्छाद्यवस्थायां तद्विशेषदर्शनाज्जीवत्ययमिति प्रतिपत्तार', कथमन्यथा तदवस्था[3]ऽपनोदाय तेषां[4] चिकित्साविधावुपक्रम' । विभिन्नसमयं यथा 'उत्तरेद्युद्यु (र्द्यु)तिपतिरुदेष्यति अद्यतनद्युतिपतेरुदयात्' । तदित्थमन्यदपि विधिसाधनं प्रतिपत्तव्यम् ।

प्रतिषेधसाधनमपि द्विधा — विधिरूपं प्रतिषेधरूपं चेति । विधिरूपमप्यनेकधा—विरुद्धं, तत्कार्यं, तत्कारण, कार्यकारणं चेति । तत्राद्य यथा 'नास्त्यत्र शिशीरस्पर्शो वह्नेः' इति, वह्निः खद्धष्णत्वव्याप्येनावगम्यमानस्तत्प्रतिषेध्यस्य शिशिरस्पर्शस्याभावगमक' स्यात् । विरुद्धकार्यं यथा 'नास्त्यत्र शीतस्पर्शो धूमात्[5]', धूमो हि वह्नितत्कार्यत्वेन तद्विरोधिशीतस्पर्शाभावगमकः स्यात् । कारणविरुद्धकार्यमप्यदसीयो भेदः 'नास्य हैमनो रोमहर्षादिविशेषो धूमात्' इति[6], धूमो हि हिमस्य तत्प्रतिपक्षिदहनोपनयनेनाभावमधिगमयंस्तत्कार्यतद्विशेषाभावगमकः स्यात् । विरुद्धकारणं यथा 'नायं मुमुक्षुः परपीडकः कृपालुत्वात्[7]', कृपालुत्वं हि अनुग्रहतातद्वतस्तत्प्रतिपन्थिपरपीडकत्वाभावगमकं स्यात् । कारणविरुद्धकारणमपीदमीयो विकल्पः यथा 'नास्य मुनेर्मिथ्यावादस्तत्त्वशास्त्राभियोगात्[8]', तदभियोगो हि तत्त्वज्ञानं तद्वतस्तन्निषेध्यमिथ्याज्ञाननिवृत्तिनिवेदनेन मिथ्यावादाभावगमकः स्यात् । कार्यकारणमपि अनेकधा विरुद्धव्याप्त्यादिभेदात् । तद्यथा 'नास्ति भावेषु सर्वथैकान्त सत्त्वात्', सत्त्वं हि अनेकान्तेन व्याप्त-

१ सपक्षाव्यापकत्वम् । २ अर्थान्तरम् । ३ गाढमूर्छाद्यवस्था । ४. प्रतिपत्तृणाम् । ५ शिशिरस्पर्शविरोधिवह्निकार्यं धूम' । ६ हैमनरोमहर्षकारण हिम, तद्विरोधिवह्निकार्यत्वं धूमे । ७ परपीडनस्य विरोधि अपरपीडनम् । ८. मिथ्यावादकारण मिथ्याज्ञान तस्माद्विरुद्ध सम्यग्ज्ञानं तत्कारण तत्त्वशास्त्राभियोग ।

ऽन्यथा तदनुपपत्तेः[1]। यदि भावः स्वार्थक्रियाकारी ह्येकस्वभावस्तदैकमेव कार्यं स्यान्न देशकालाकारादिभिन्नमनेकम्। ततोऽन्यथा विश्वविश्वस्याप्येकहेतुकतापत्तेः। सहकारिभेदादेकस्वभावादेवानेकान्तमिति नानुमेयम, अनेकस्वभावस्यैव तत्तत्समुदायिनां तत्तद्रूपस्य हेतोरनेककार्यकारित्वात्, नावस्थानं चानादित्वात् तत्प्रबन्धस्य, ततस्तद्विरोधि सर्वथैकान्तनिरासमाधनं सिद्धमिति। विरुद्धसहचरं यथा 'नास्य मिथ्याज्ञानं सम्यग्दर्शनाविर्भावात्' इति, तदभावेन हि विरुद्धस्तत्सद्भाव इति, विरुद्धसहचरस्य तु कारणमत्रैव साध्येत तत्त्वाधिगमादिति, कार्यं च शमसंवेगादेरिति, तत्त्वाधिगमो हि सम्यग्दर्शनस्य कारण, शमसंवेगादि च कार्यमविनाभावनिश्चयात् सम्यग्ज्ञानसहभाविन तद्भावमधिगमयन् मिथ्याज्ञानव्युदासाध्यवसायमासादयेदिति। तथाऽन्यदपि विधिरूप प्रतिषेधलिङ्गमनुमन्तव्यम्। अनुपलब्धिकसाधकप्रतिषेधरूपमपि तल्लिङ्गमनेकधा—स्वभावकारणव्यापकानुपलम्भादिभेदात्। तत्र स्वभावानुपलम्भो यथा 'नास्ति बोधात्मनि रूपादिमत्त्वम् अनुपलम्भात् खरशिरसि विषाणवत्'। कारणानुपलम्भो यथा 'न तत्रौकसि पाकसम्भव पावकानुपलम्भात्'। व्यापकानुपलम्भो यथा 'नास्त्यत्र शिंशपा वृक्षानुपलम्भात्'। कार्यानुपलम्भो यथा 'नात्र शरीरेषु बुद्धिर्व्यापारादिविशेषानुपलब्धे.'। सहचरानुपलम्भो यथा 'नास्त्यस्य तत्त्वज्ञानं सम्यग्दर्शनाभावात्'। पूर्वचरानुपलम्भो यथा 'न भविष्यति मुहूर्तान्ते शकटोदयः कृत्तिकोदयानुपलब्धे.'। उत्तरचरानुपलम्भो यथा 'मुहूर्तात् प्राग् नोदगाद् भरणिः कृत्तिकोदयानुपलब्धे.' इति। प्रतिषेधेनाप्यनुपलम्भसिद्धौ विधिसाधनसम्भवोऽपि त्रिधा—विरुद्धकार्यस्वभावानुपलम्भादिभेदात्। विरुद्धकार्यानुपलम्भो यथा 'अस्मिन्नङ्गिनि कोऽप्यस्ति रुग्विशेषस्तथोल्लाघत्वानुपलब्धेः', रुग्भेदस्तु नैरुज्येन विरुद्धस्तदभावे तत्कार्यविशिष्टचेष्टायाँ अनुपलम्भवतो रुग्विशेषानुमानम्। विरुद्धकारणानुपलम्भो यथा 'अस्त्यत्र प्राणिनि सुखमनिष्टसयोगाभावात्', सुखेन हि विरुद्धं दुःखम्, तस्य कारणमनिष्टसयोगः, तदभावः तदनुपलम्भः सुखास्तित्वगमक. स्यात्। विरुद्धस्वभावानुपलब्धिर्यथा 'अनेकान्तं वस्त्वेकान्तानुपलब्धेः', अनेकान्तेन विरुद्धो नित्यैकान्तः क्षणिकैकान्तो वा, तस्यानुपलब्धिः प्रत्यक्षादिप्रमाणेनास्य ग्रहणाभावात् सुप्रसिद्धा। परम्परया सम्भवत्कार्यकार्यादिसाधनमपि कार्या(र्य ?)विरुद्धोपलम्भेऽन्तर्भावनीय यथा 'अभूदत्र चक्रे शिवकः स्थासात्', शिवकस्य हि साक्षाच्छत्रकः कार्यं स्थासस्तु परम्परया, अन्यथा तु नियतपरिमाणव्याघातः स्यात्। एवं हि तादात्म्यतदुत्पत्तिलक्षणप्रतिबन्धेऽप्यविनाभावादेव

१. एकान्तविरुद्धोऽनेकान्तस्तेन व्याप्तस्तत्त्वम्। २. सम्यग्दर्शनसद्भावम्। ३. नैरुज्यस्य कार्यं या विशिष्टा चेष्टा तस्या अनुपलम्भत.।

गमकत्वम्, तदभावे[1] वक्तृत्व-तत्पुत्रत्वादेस्तादात्म्य-तदुत्पत्तिप्रतिबन्धे सत्यपि असर्वज्ञत्वे श्यामत्वे च साध्ये गमकत्वाप्रतीतेस्तदभावेऽप्यविनाभावानुग्रहादेव कृत्तिकोदय-चन्द्रोदय-गृहीताण्डकपिपीलिकोत्सर्पणैकाम्रफलोपलभ्यमानमधुररसस्वरूपाणां हेतूनां यथाक्रमं शकटोदय-समसमयसमुद्रवृद्धि-भाविवृष्टि-समकालकुङ्कुमारुणरूपसद्भावेषु साध्येषु गमकत्वप्रतीतेरिति । तदित्थंभूतलिङ्गप्रभवमनुमानं प्रमाणमेव ।

अथ प्रत्यक्षादेः प्रमाणस्य स्वार्थवैकल्यमप्यां(प्यं)तरङ्गावरणोदयाविनाभूतबहिरङ्गाक्षदोषविजृम्भितेन प्रमाणाभासोऽपि स्यात्, तदेवाह—'अज्ञानात्मकानात्मप्रकाशकस्वमात्राभासकनिर्विकल्पकसमारोपाः प्रमाणस्य स्वरूपाभासाः ।' तन्नाज्ञानात्मकं तु सन्निकर्षादि ज्ञानम् अपेक्षितपरव्यापारत्वात् स्वरूपपररूपव्यवस्थाऽनुपपत्तेः । अथ यदि सन्निकर्षस्यैव प्रत्यक्षत्वं ततश्चक्षुषा रूपवद् रसादेरपि ग्रहणप्रसङ्गस्तस्य तत्रै(त्रे?)वेतरत्रापि सयुक्तसमवायेन सन्निकर्षात्, सन्निकर्षादिसद्भावेऽपि भावेन्द्रियासन्निधाने स्वार्थसंवेदनाऽनुपपत्तेश्च, अञ्जनादेः सन्निकृष्टस्यापि चक्षुषा प्राप्तस्यापि घटादिवद् [अ]दर्शनादिति सत्यं स्वरूपाभासत्वं प्रत्यक्षस्य सन्निकर्षज्ञानमिति । अनात्मप्रकाशकमस्वसंविदितज्ञानम्, न हि स्वरूपमनिश्चिन्वन् विकल्पोऽर्थनिश्चायकः स्यात् । स्वमात्रावभासकं परवादिनोऽर्थापलापकं ज्ञानम् । निर्विकल्पकं तु दर्शनम्, तदाऽऽकस्मिकधूमदर्शनाद् वह्निविज्ञानवत्, तदुक्तं च "विषयदर्शनवत् सर्वमज्ञस्याकल्पानात्मकं दर्शनं न प्रमाणं स्यादविसवादहानितः" इति । समारोपस्तु प्रमाणपरिपन्थिकोऽतस्मिंस्तदित्यध्यवसायलक्षणः । स च सशयविपर्यासाव्युत्पन्नात्मक इति । तत्र 'मरुमरीचिकाचक्रं तोयादिर्वा' इति चलिता प्रतीतिः सशयः, शुक्तिकायां रजतारोपो विपर्यासः, किमित्यालोचनोल्लिङ्गि ज्ञानम[न]ध्यवसायः, पथि पुरुषस्य गच्छतः तृणस्पर्शवदिति । चैत्रे मैत्रस्यारोपः समारोपस्त्र्यङ्ग इति प्रत्यक्षाभासः । तद्वदनुमानेऽप्युक्तस्यान्तरङ्गबहिरङ्गरूपस्य हेत्वाभासादेस्तद्धेतोर्भावात् तत्र त्रिविधो हेत्वाभासः—असिद्धानैकान्तिकविरुद्धविकल्पात् ।

तत्रासिद्धोऽपि त्रिधा—स्वरूपाज्ञातसदिग्धभेदात् । स्वरूपासिद्धो यथा 'अनित्यः शब्दश्चाक्षुषत्वात्' इति, न हि शब्दस्य चाक्षुषत्वम्, श्रावणत्वस्यैव तत्र भावतः प्रतिपत्तेः । अज्ञातासिद्धस्तु शब्दानित्यत्वे सर्वोऽपि कृतकत्वादिः, न हि तस्यै कुतश्चित् परिज्ञानम्, प्रत्यक्षस्य स्वलक्षणविषयतया सामान्यात्मनि, स्वलक्षणे विकल्पस्य च स्वाकारपर्य-

१. अविनाभावाभावे । २. तादात्म्यतदुत्पत्तिप्रतिबन्धाभावेऽपि । ३. कृतकस्य ।

वसायित्वेनाप्रवृत्तेः । संदिग्धासिद्धो यथा 'सानुमानयं वह्निमान् धूमादिति', तत्र धूमो वाष्पादिर्भूतसङ्घातो वेति संशय्यमानो न ह्यसौ वह्निप्रतिपत्तौ धूमतयोपदिष्टो गमकः स्यात्, निश्चितस्यैव तत्त्वोपपत्तेः, संदिग्धस्य चानिश्चितत्वात् मुग्धबुद्धेरसन्निश्चया-दिति । तथा चाऽऽश्रयवत् स्वरूपस्यासत्त्वे आश्रयासिद्धस्य स्वरूपासिद्ध एवान्तर्भावात् सत्त्वे चान्यथानुपपत्तौ हेतुत्वस्यान्यथाव्यभिचरात् । भागासिद्धस्तु पक्षाव्यापकगमक-त्वेन निर्धारणाच्छब्दस्य प्रयत्नान्तरीयकत्वेऽपि जलधराम्भोधिघोषादावभावात् । तथा 'चेतनास्तरवः स्वापात्', तस्य द्विदलेष्विवैकदलेष्वपि चेतनत्वस्याव्यभिचारात् तदन्या-सहेतूपस्थापनेन तस्यापि व्यवस्थापनान्न दोष इति । विपर्यस्तासिद्धस्त्वज्ञातासिद्ध एवान्तर्भूतो धूमस्य विपर्यासेन प्रतीयमानस्य स्वरूपापरिज्ञानात् । तत्रासत्सत्तानिश्च-योऽसिद्ध इति लब्धवर्णवाचस्तल्लक्षणेनैव विशेष्यविशेषणासिद्धसंदिग्धव्यर्थविशेष्यविशे-षणव्यधिकरणासिद्धादयोऽपि प्रदर्शनमात्रेण प्रतिपत्तव्या. 'धवलः प्रासादः काकस्य कार्ष्ण्यात्' इत्यादिवदिति ।

तथा विपक्षेऽप्यविरुद्धवृत्तिरनैकान्तिकः सव्यभिचारः । स द्विधा—निश्चितव्य-भिचारसंभाव्यव्यभिचारभेदात् । तत्राद्ये निश्चितो व्यभिचारः पक्षैकदेशे यथा 'पक्वा-न्येतानि फलानि, एकशाखाप्रभवत्वात् उपभुक्तफलवत्' इति, न त्वस्ति ह्यत्रानुमाने तत्रैवं तन्निश्चयः पक्षीकृतेष्विव बहुलमामेष्वपि प्रकृतहेतोर्भावात् । क्वचिदपरत्र यथा 'सः श्याम-स्तत्पुत्रत्वादितरतत्पुत्रवत्' इत्यपरत्रैव तन्निश्चयः श्याम इवाश्यामेऽपि तत्पुत्रत्वस्य दर्शनात्। द्वितीयो यथा 'विवादापन्नः पुरुषः किञ्चिदज्ञो रागादिमान् वा, वक्तृत्वादेः रथ्यापु-रुषवत्' इति[4]। सम्भावना व्यभिचारस्यात्र सर्वज्ञादावपि विरोधाभावेन वक्तृत्वादेः सम्भवा-विरोधात्, विरोधो वा ज्ञानप्रकर्षातात(र्षतार)तम्यस्यैव वक्तृत्वस्यापकर्षतारतम्योपल-म्भात्, न चैवं 'किञ्चिज्ज्ञो न सर्वज्ञः' इति पर्युदासवृत्त्याऽभिधीयते, न च ज्ञानतारतम्याद् वचनस्यापि तथाभावो दृश्यते । प्रसज्यप्रतिषेधवृत्तित्वे शवशरीरादौ तदुपलम्भप्रसङ्गः, ततः सत्यपि वक्तृत्वे किञ्चिज्ज्ञेऽप्यतिशयतारतम्यस्यैव प्रतिपत्तेः । ततः सम्भवत्ये-वातिशयपर्यन्तगतज्ञानस्य सकलवेदिनो वक्तृत्वम्, सुस्थितं तर्हि सम्भाव्यव्यभिचारत्वाद् वक्तृत्वादेरनैकान्तिकत्वमिति । तदेतल्लक्षणलक्षितत्वाविशेषात् पराभ्युपगतपक्षत्रयव्याप-काद्यनैकान्तिकः प्रपञ्चोऽप्यनर्थान्तरमेव ।

साध्यार्थाभावनियमनिश्चितो विरुद्धो हेत्वाभासः । स चानेकधा — धर्मतद्विशे-षाभ्यां धर्मितद्विशेषाभ्यां विपर्ययस्यैव साधनात् । तत्र धर्मविशेषविपर्ययसाधनो यथा

१. धूमवाष्पादिविवेकानिश्चये कश्चिदाह । २ एकशाखायामेव । ३. एकशाखाप्रभवत्वाद् इत्यस्य । ४. मीमांसकाना मते सर्वज्ञो नास्ति ।

'नीलतद्ज्ञानयोरभेदः सहोपलम्भनियमाद् द्विचन्द्रवत्' इति, तत्साधनत्वं चास्य यो(यौ)-गपद्यार्थे सहशब्दे तन्नियमस्याभेदविरुद्धे नानात्व एव भावात्, सन्नपि तत्र तन्नियमो विरुद्ध एव तद्विशेषविपर्ययसाधनत्वादिति । धर्मिविशेषविपर्ययसाधनो यथा 'अभावो न द्रव्यम्, एकद्रव्यवत्वात् द्रव्यत्ववत्' इति, द्रव्यत्वं हि यथा न द्रव्यं न तथा-ऽभावोऽपि । तथा 'पुरुषोऽस्ति भोक्तृत्वात्' इति । अत्रापि कूटस्थपुरुषधर्मिविशेषत्वेन भोक्तृत्वस्य तत्साधनतया तद्विपरीतसाधनत्वमतो विरुद्धत्वम् । इत्थं विरुद्धत्वा(द्धा)-व्यभिचारिणोऽपि । विरुद्धत्वं तु निरन्वयविपर्ययस्य सान्वयविनाशस्यैव साधनादने-कान्तवादिनां विरुद्ध एव विरुद्धाव्यभिचारीति । उक्तं च—

विरुद्धाव्यभिचारी स्यात् विरुद्धो विदुषां मतः ।
प्रक्रियाव्यतिरेकेण सर्वे समोहहेतवः ॥ [ ] ॥इति॥

तदितरेषां तु कृतकत्वानित्यत्वादयः संशयहेतव एव । पराभ्युपगतविरुद्धभेदा-श्चैकमेतल्लक्षणत्वाविशेषादत्रैवान्तर्भावनीयमिति । अथ यदविनाभावो हेतुलक्षणमिति साध्यम् तद्विपरीत साध्याभासम्, तच्च प्रत्यक्षादिविरुद्धभेदादनेकधा । तत्र प्रत्यक्षविरुद्धं यथा 'अनुष्णोऽग्निर्द्रव्यत्वाज्जलवत्', 'प्रतिक्षणविशरारवो भावाः' इति वा, प्रत्यक्षतस्तेषु कथञ्चिदविशरणस्यापि प्रतिपत्तेः । अनुमानविरुद्धं यथा 'न सन्ति बहिरर्थाः' इति साधनदूषणप्रयोगादिना तद्भावस्यावस्थापनात् । आगमविरुद्ध यथा 'प्रेत्यासुखदो धर्मः पुरुषाश्रितत्वादधर्मवत्' इति, आगमे हि धर्मस्याभ्युदयनिःश्रेयसहेतुत्वं तद्विपरीतम-धर्मस्येति । स्ववचनविरुद्धं यथा 'न वाचो वस्तुविषयाः' इत्यस्य वस्तुविषयत्वे प्रकृत-प्रतिज्ञानस्य विरोधात् । अवस्तुविषयत्वे चानर्थकवचनतया निग्रहस्थानत्वापत्तेः । लोकविरुद्ध यथा 'शुचि नरशिरःकपालं प्राण्यङ्गत्वात् शङ्खशुक्तिवत्' । लोके हि प्राण्यङ्ग-त्वाविशेषेऽपि किञ्चिदपवित्र पवित्र च यथा गोपिण्डोत्पन्नत्वाविशेषेऽपि वस्तुस्वभावात् किञ्चिद् दुग्धादि शुद्धं न गोमांसम् ।

अथ साध्यसाधनधर्मयोः सम्बन्धो यत्र निर्णीतः स दृष्टान्तोऽन्वयव्यतिरे-काभ्यां द्विधा । तदाभासाः पुनरसिद्धसाध्यसाधनोभयादयो यथा 'अपौरुषेयः शब्दो-ऽमूर्तत्वादिन्द्रियसुखपरमाणुघटवत्' इति । इन्द्रियसुखे हि साधनममूर्तत्वमस्ति साध्यं त्वपौरुषेयत्व नास्ति पौरुषेयत्वात् तस्येति साध्यविकलम् । परमाणुषु तु साध्यमपौरुषेय-त्वमस्ति साधनममूर्तत्वं नास्ति मूर्तत्वात् तेषामिति साधनविकलम् । घटे तूभयमपि नास्ति पौरुषेयत्वान्मूर्तत्वाच्चास्येत्युभयविकलम् । 'रागादिमान् सुगतो वक्तृत्वादेः रथ्यापुरु-

१ विरुद्धसाधनत्वम् । २. द० प्रमाणमीमांसा २.१.२० ।

षवत्' इति, रथ्यापुरुषे साध्यस्य प्रत्यक्षेणानिश्चयाद् वचनस्य च तत्र दृष्टस्य तदभावेऽपीच्छया सम्भवादिति संदिग्धसाध्यम् । 'मरणधर्माऽयं रागात्' इति संदिग्धसाधनम् । 'असर्वज्ञोऽयं रागात्' इति संदिग्धोभयम्, रागादिवदसर्वज्ञस्यापि तत्र निश्चेतुमशक्यत्वात् । 'रागादिमानयं वक्तृत्वात्' तत्र रागादेरसिद्धौ तदन्वयस्यासिद्धेरित्यनन्वयम् । 'अनित्यः शब्दः कृतकत्वात् घटवत्' इति, ततोऽत्र 'यत् यत् कृतकं तत् तदनित्यम्' इत्यन्वयप्रदर्शनस्यात्राभावादप्रदर्शितान्वयम् । 'यदनित्यं तत् कृतकम्'इति विपरीतान्वयम् । तदित्थं नवान्वयदृष्टान्ताभासा' तथा व्यतिरेकेणापि । तद्यथा व्यतिरेके दृष्टान्ताः — असिद्धसाध्यसाधनोभयव्यतिरेकादयो यथा 'अपौरुषेयः शब्दोऽमूर्तत्वात्, यन्नापौरुषेयं तन्नामूर्तं परमाण्विन्द्रियसुखाकाशवत्' इति । परमाणुभ्यो ह्यमूर्तत्वव्यावृत्तावप्यपौरुषेयत्वं न व्यावृत्तमपौरुषेयत्वात् तेषामिति साध्याव्यावृत्तम् । इन्द्रियसुखे त्वपौरुषेयत्वव्यावृत्तावपि अमूर्तत्वं न व्यावृत्तममूर्तत्वात् तस्येति साधनाव्यावृत्तम् । आकाशे तूभयं न व्यावृत्तमपौरुषेयत्वादमूर्तत्वाच्चास्येति द्वयाव्यावृत्तम् । 'असर्वज्ञः कपिलोऽक्षणिकैकान्तवादित्वात्, यः यः सर्वज्ञः स स क्षणिकैकान्तवादी यथा सुगत'' इति सदिग्धसाध्यव्यतिरेकम् । 'अनित्यः शब्दः सत्त्वात्, यन्न तथा न तत् सद् यथा गगनम्' इति गगनसत्त्वसाधनव्यतिरेकम् । 'संसारी हरिहरादिरविद्यादिमा(म)त्वात्, यस्तु नैवं नासौ तथा यथा बुद्धः' इति संदिग्धोभयव्यतिरेकं बुद्धात् संसारित्वादिव्यावृत्तेः प्रमाणानवधारणात् । 'नित्य. शब्दोऽमूर्तत्वात्, यन्न नित्यं न तदमूर्तं यथा घटः' इत्यव्यतिरेकम् । घटे सतोऽपि साध्यव्यतिरेकस्य हेतुनिवर्तनं प्रत्यप्रयोजकत्वादन्यथा कर्मण्यपि तस्य कर्मत्वोपपत्तेः 'अनित्य' शब्दः सत्त्वात्, वैधर्म्येणाकाशवत्' इत्यप्रदर्शितव्यतिरेकम् । तत्रैव 'यन्न सन्न तदनित्यमपि यथा नभ'' इति विपरीतव्यतिरेकम् । त इमे नव, पूर्वेऽपि अष्टादशदृष्टान्ताभासाः प्रतिपत्तव्याः ।

असम्यगनुभूतेऽर्थे तदेवेति ज्ञानं स्मरणाभासं यथा जिनदत्ते दृष्टे स देवदत्तो यथेति । तथा तुल्येऽर्थे 'स एवायम्' इति यमलजातवदिति ज्ञानं प्रत्यभिज्ञानाभासम् । अविद्यमानव्याप्तौ तदवभासस्तर्काभासो यथा 'स श्यामस्तत्पुत्रत्वादितरतत्पुत्रवत' इति । अव्युत्पन्नव्युत्पत्तये पञ्चावयवोऽपि प्रयोगः, प्रयोगाभासस्तत्र कियदङ्गहीनतापि यथा 'वह्निमानय देश., धूमवत्त्वात्, यदित्थं तदित्थम्, यथा महानस.' इति 'धूमवांश्चायम्' इति यो व्युत्पन्नप्रज्ञोऽनुमानप्रयोगे पञ्चावयवे गृहीतसङ्केतः स उपनयनिगमनरहितस्यानिगमनस्य वा प्रयोगस्य तदाभासता मन्यते । अथ रागद्वेषमोहाक्रान्तपुरुषवचनाज्जातमागमाभासम् । रागाक्रान्तो हि पुरुषो विनोदार्थं वस्तु किञ्चिदलभन् माण-

१. रागाद्यभावे ।

वकैः सहेदमुद्गरति यथा 'कूलंकषाकूले मोदकराशयः सन्ति धावध्वं माणवकाः' इति, तथा कचित् कार्ये व्यासक्तचेता माणवकैः कदर्थितो दोषाक्रान्तोऽपि निजाश्रमात् तदुच्चाटानायेदं ब्रूयाद्वा, मोहाक्रान्तस्तु साङ्ख्यादिः 'अङ्गुल्यग्रे करिनिकरशतमास्ते' इदमुद्गिरेद्वा, न ह्यज्ञानमहीधराक्रान्तः पुमान् यथावद्वस्तु विवेचयितुं क्षमो विपरीतार्थोऽपि स्थापकप्रमाणावसेयत्वादागमाभासतेति। तदित्थमङ्गवैकल्यादिवैपरीत्येन सङ्ख्याभासविषयाभासफलाभासादयः प्रतिपत्तव्याः। अतः प्रमाणतदाभासस्वरूपौ यथावत् प्रतिपन्नाऽप्रतिपन्नधर्मौ जयेतरव्यवस्थानिबन्धनं स्यातामिति। अनुमाननिर्णयः।

॥ श्रीप्रमाणसुन्दरप्रकरणे साभासः अनुमानखण्डः तृतीय. ॥

*

* *

साक्षादाप्तज्ञानातिशयपरिच्छिन्नयथावदर्थप्रतिपत्तिरागम । स च शब्दात्मकः प्रमाणकारणकार्यत्वादुपचारतः प्रमाणम्, मुख्यतस्तत्संवेदनमेव। एतस्योपदेष्टाऽतीन्द्रियार्थद्रष्टा भगवानेव। आगमस्य च पौरुपेयत्वादेव प्रामाण्यप्रतीते, आप्तपुरुषाधीनत्वात्, अन्यथा जलधरध्वानोन्मत्तसुप्तप्रलापादेरपि प्रामाण्यप्रसङ्गः।

अथापौरुषेयाः वेदा अस्मर्यमाणकर्तृत्वात्, ततः कर्तृस्मरणमन्तरेण वेदाः प्रमाणं चेन्न च कर्तृस्मरणं परस्यानिष्टम्, स हि पदवाक्यत्वेन हेतुना तत्कर्तुः स्मरणं प्रतीयन्[३] कथं तत्स्मरणस्यानिष्टतां ब्रूयात्? अपौरुषेयत्वं स्वतः सिद्धं चेत् कथं प्रतीयेम? यदि लौकिकेनाग्न्यादिशब्देनाविशिष्टत्वाद् वैदिकस्याग्न्यादिशब्दस्यार्थप्रतिपत्तिस्तर्हि पौरुषेयेणाविशिष्टत्वात् पौरुषेय एवासौ कथं न स्यात्, लौकिकस्य ह्यग्न्यादिशब्दस्यार्थवत्त्वं पौरुपेयत्वेन व्याप्तम्। तत्रायं वैदिकोऽग्न्यादिः पौरुपेयत्वं परित्यज्य तदर्थमेव ग्रहीतुमशक्नोति। उभयमपि हि गृह्णीयात्। न च लौकिकवैदिकशब्दयोः शब्दधर्मत्वाविशेषे सङ्केतग्रहणसव्यपेक्षत्वेनार्थप्रतिपादकत्वेऽनुच्चारितयोश्चान्येनाश्रवणे तुल्येऽन्यो विशेषोऽस्ति यतो लौकिकवैदिकयोः पौरुषेयापौरुपेयत्वसम्भवः। न चापौरुषेयत्वे पुरुषेच्छावशादर्थप्रतिपादकत्वं युक्तम्। उपलभ्यते च यत्र पुरुषै सङ्केतिताः शब्दास्तं तमर्थमविगानेन प्रतिपादयन्ति। ततोऽन्यथा तत्सङ्केतभेदकल्पनाऽऽनर्थक्यं स्यात्। ततो 'ये पुरुषवचनरचनाविशिष्टास्ते पौरुषेया यथाऽभिनवकूपप्रासादादिरचनाविशिष्टा जीर्णकूपप्रासादादयः, पुरुषवचनरचनाविशिष्टं च वैदिक वचनम्' इति। श्रूयते च श्रुतिभ्योऽपि तत्कर्ता। 'यो वेदांश्च प्रहिणोति' इत्यादि 'हिरण्यगर्भ. समवर्तताग्रे' वेति

१. अर्थ। २. ज्ञान। ३ जानन्। ४. अनिन्दनेन। ५. पुरुषसङ्केतमन्तरेण। ६ शब्द।

कर्ता स्मर्यते तथावाक्येभ्यः। तथा काण्व-माध्यंदिन-तैत्तिरीयादयः शाखाभेदाः कथमस्मर्यमाणकर्तृकाः। ततः स्ववचनविरुद्धोऽयं पक्षाभासो, यथा 'माता मे वन्ध्या, पुरुषसंयोगेऽपि गर्भाभावात्, प्रसिद्धवन्ध्यावत्' इति। ततः सिद्धमाप्तप्रणीत एवागमः प्रमाणम्, पौरुषेयत्वादिति।

तत्र सदसदादिभिरभिधेयमर्थमनन्तधर्मात्मकं संवित्ते यथावदभिधत्ते वा स एवाप्तः। स च द्विधा—विकलाविकलज्ञानविकल्पात्। विकलज्ञानस्याप्तत्वं तद्वचनस्याधिकं व्यवहाराविरूढत्वात्। अविकलज्ञानो द्विविध—परोक्षप्रत्यक्षज्ञानभेदात्। तत्र परोक्षज्ञानो गणधरादि[१] तस्य तु प्रवचनोपनीतविश्वार्थपरार्थविषयाविशदज्ञानतया परोक्षज्ञानत्वात्। प्रत्यक्षज्ञानवांस्तु स्याद्वादवादी तीर्थंकरभट्टारकस्तदन्योऽपि केवली तस्य निरवशेषनिर्धूतकषायदोषमलोपलेपतया परमवैराग्यातिशयविजृम्भितस्य सकलद्रव्यपर्यायात्मकानन्तधर्मात्मकवस्तुतादात्विकैप्रतपनसाक्षात्कारिणः प्रत्यक्षज्ञानस्य भावात्। ततो युक्तं तदुक्तत्वात् प्रवचनस्य गुणवत्त्वमविरुद्धत्वादित्वमन्यथा[२] तद्वचनस्य तथात्वासम्भवात्[३]। वीतरागस्यापि सरागवदीहापूर्वकं वचनमिति न शङ्कनीयम्, तस्य तु प्राग्भवार्जिततीर्थंकरगोत्रसुकृतविशेषोपनिपातात् स्वभावादेव भानुमतो नलिनविकाशवदुदन्वदम्भोविवर्धनवच्च तुहिनद्युतेर्विजृम्भते निरीहितो ध्वनिविशेषः। तत्र[४] तु प्रत्यर्थनियतविषयाभिसंधेर्नियततायास्तु सम्भवः। प्रश्नविषय एव प्रत्यर्थनियतानेकस्वभावाधिकरणादपि तद्दर्शनात् तदुपपत्तेः। न च क्षायिकं केवलज्ञानं क्रमेणाशेषार्थग्राहकं यतोऽशेषघातिकर्मपरिक्षये सहस्रोस्रवद(द्) युगपदखिलार्थोद्द्योतकस्वभावत्वात् तस्य[७] करणक्रमव्यवधानातिवर्तित्वाच्चेति। तत्र प्रथमक्षणे एवाशेषार्थोद्द्योतित्वं द्वितीये त्वज्ञ इति सर्वज्ञापलापवादिभिर्न मन्तव्यम्, ज्ञेयनिष्ठं ज्ञानं वैशद्यमनुभवतीति ज्ञानज्ञेयद्वयस्यानन्तत्वादुक्तदोषानवकाशैः। तन्निष्ठत्वे तु तद्वानेवेति न मन्तव्यं तथापरिणामो हि तत्त्वकारणं न संविन्मात्रम्। अन्यथा मद्यादिरित्थंभूतरस इति वाक्याच्छ्रोत्रियस्यापि तद्रसास्वादनदोषप्रसङ्गः। रसनेन्द्रियजत्वात् तस्यादोषोऽन्यत्रापि समानः। तथा क्वचिद्विषये[११] तस्योद्भूतेस्यात्मभावतया[१३] विनाशासम्भवात्। न हि स्वभावो भावस्य विनश्यति स्फटिकस्य स्वच्छतादिवत्। अन्यथा तस्याप्यभावः स्यादौपाधिकस्येव नियतविनाशादिति। अथानुमानागमज्ञानस्यास्पष्टत्वात् तज्जनितस्याप्यवैशद्यं ततो न विशदज्ञानवानिति बालविलसितम्। न हि सर्वथा कारणानुरूपमेव कार्यं

---

१ तदानीं भव प्रकाश। २ केवलज्ञानमन्तरेण। ३ आगमासम्भवात्। ४. ध्वनिविशेषे ५ निश्चित। ६. अभिप्रायात्। ७. केवलज्ञानस्य। ८. इन्द्रिय। ९ केवलज्ञाने। १०. अप्रसक्त ज्ञेय.। ११. कैवल्यादिविषये। १२. कैवल्यस्य। १३. आत्मरूपतया।

तद्विसदृशस्याप्यङ्कुरादेर्बीजादेरुत्पत्तिदर्शनात् । सर्वत्रापि सामग्रीभेदात् कार्यभेदः । अत्रापि आगमादिज्ञानेनाभ्यासप्रतिबन्धकापायादिसामग्रीसहायेनासादिताशेषविशेषविज्ञानमाविर्भाव्यते[1] भावना[2]बलात् । ततो युगपत् परस्परविरुद्धानामन्धतमसोद्द्योतादीनाम् एकत्र संविदि[3] युगपत् प्रतिभाससंवेदनम् । अन्यथा 'यत् कृतकं तदनित्यम्' इत्यादिव्याप्तिज्ञानाभावानुषङ्गः स्यात् । अलं प्रपञ्चेन ।

ततस्तत्प्रणीतवचनेऽस्ति चायं प्रमाणाविरोधलक्षणाविसंवादः, ततस्तदर्थस्य[4] कस्यचित् प्रत्यक्षेणापरस्यानुमानेनात्यन्तपरोक्षस्य तदेकदेशैरविरुद्धतयैव प्रतिपत्तेः ।

तत्र प्रतिपत्तव्यार्थानाह—भावेष्वनेकान्तः, परिणामः, मार्गः, तद्विषयश्चेति । तत्रानेकान्तो नाम युगपदनेकरूपत्वं तेषां[5] परिणामश्च क्रमेण । अस्ति हि तयोः[6] 'गुणपर्ययवद् द्रव्यम्' 'उत्पादव्ययध्रौव्यवत् सत्' इति प्रभृतेरागमादिव प्रत्यक्षादेरपि प्रतिपत्तिः, चेतने तु स्वपरविकल्पविभ्रमादिभिः स्वस्वभावैः, अचेतनेऽपि सामान्यविशेषगुणादिभिस्तदेकान्तभेदाभेदयोरप्रतिपत्त्या प्रतिक्षेपेणायुगपदनेकरूपस्याध्यक्षतः[7], शक्तिभेदैश्च[8] कार्यभेदप्रतिपत्तिकादनुमानतोऽपि निर्णयपथप्रापणात् । एवं परिणामस्य । तस्यापि स्मरणप्रत्यभिज्ञानाद्यनुपातिनश्चित्स्वभावस्याचित्स्वभावस्यापि कुण्डलप्रसारणाद्यनुषङ्गिभुजङ्गाद्यात्मनः स्वानुभवाद् इन्द्रियादप्यध्यक्षतोऽन्वीक्षणात् । तदित्थमनुमानतोऽपि । तच्चेदं क्रमादप्यनेकान्तात्मा भावो युगपदपि, अन्यथा तदनुपपत्तेः । निरन्वयविनाशे तु तस्य चिद्रूपादेश्चिराक्रान्तवत् कार्यतत्समयमप्राप्तस्यानुपयोगेनावस्तुत्वापत्तेः । सान्वयविनाशे तु स एव परापरसमयेष्वपि । तस्येति तच्छब्देन वस्तुनः परामर्शात् तस्य वस्तुनः । आत्मानौ परस्परापेक्षौ भेदाभेदात्मकौ गुणपर्यायौ यस्मिन्निति व्युत्पत्त्या तदात्मनः क्रमानेकान्तस्य । ततः साधनम् — अविनाभावस्य तत्रैवाध्यवसायादिति ।

तथा निःश्रेयसस्योपेयस्य प्राप्त्युपायलक्षणस्त्रिरूपो मोक्षमार्गः । स च सम्यग्दर्शनज्ञानचारित्राणीति मोक्षमार्गः । तदनुमानं च—त्रिरूपोऽपवर्गमार्गोऽपवर्गमार्गत्वा-[द]न्यथाऽपवर्गमार्गत्वानुपपत्तेः । न चाश्रयासिद्धोऽयं हेतुः, अपवर्गवादिनां सर्वेषामेव तस्य प्रसिद्धत्वात्, न चान्यथोपपत्तिः । ज्ञानादेः पार्थक्येन तन्मार्गत्वाभावात् । पार्थक्ये तु न ज्ञानादेव केवलाद् मुक्तिः समुत्पन्नज्ञानस्याप्यमुक्तस्यावस्थितेः, न तद्व्यतिरिक्ताद् दर्शनादेवायमेभिरुचिमात्रात् तद्विषयापरिज्ञाने तस्यैवासम्भवात्, नाप्यनुष्ठानमात्रात् तद्विषयवेदनश्रद्धानयोरभावे तस्यैवाभात् । अथ 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्

१. प्रकटयते । २. अनुभूतार्थविस्मृतिः । ३. ज्ञाने । ४. आगमार्थस्य । ५. भावानाम् । ६. अनेकान्तपरिणामयोः । ७. प्रत्यक्षतः । ८. अनुमानम् । ९. मोक्षः ।

कुरुते' [ गीता ४. ३७ ] इत्यनेनैव तत्त्वज्ञानिनां कर्मसक्षयो नारब्धजन्मान्तरशरीरश्चे(स्ये)त्यसुन्दरम् । तथा सत्यपि निषिद्धाचरणस्य प्रवृत्तेरसाधीयस्त्वाद् मोक्षापलापस्तदागमविरोधश्च 'अकुर्वन् विहितं कर्म प्रत्यवायेन लिप्यते' [ ] इति ।

नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहासया ।
मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ॥इति॥ [ ]

ततस्तदनुष्ठानं तत्परिजिहीर्षयामनवद्यमेव । नापि प्रारब्धकर्मणस्तद्विपाकवेदनव्यतिरेकेण मोक्षोपलम्भः स्यात् । "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" ।[2] [ ] तदनुमानं च—कर्माण्युपभोगादेव क्षीयन्ते, कर्मत्वात्, प्रारब्धशरीरकर्मवदिति । ततस्तन्नियतिना[शा]य तपोविशेषाचरणं निःश्रेयसकारणमस्तु । तत्रापि ज्ञानाग्नेः सानुष्ठानतयैव व्याख्यानात् । 'यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुते क्षणात्' इति तु सकलं संवररूपचारित्रोपबृंहितस्यैव ज्ञानाग्नेरशेषकर्मक्षये सामर्थ्याभ्युपगमात् सिद्धसाधनम् । अन्यथा तदुपभोगेनैव इत्येकान्तोपपत्त्याऽप्यागामिककर्मनिमित्ताभिलाषे संसारानुच्छेदः । ततः सम्यग्ज्ञानस्य तु मिथ्याज्ञानोच्छेदक्रमेण वाह्याभ्यान्तरग्रन्थमोहनिवृत्तिधर्मसंयमोपबृंहितस्यागामिकर्मानुत्पत्तिसामर्थ्यात् संचितकर्मक्षयेऽपि सामर्थ्यं सम्भाव्यत एव यथोष्णस्पर्शस्य भाविशीतस्पर्शानुत्पत्तौ सामर्थ्यवत् प्रवृत्ततत्स्पर्शादिध्वंसेऽपि सामर्थ्यस्य संभावनात् । किञ्च, वैद्योपदेशादातुरोऽप्यौषधाद्याचरणे नीरुग्भावाभिलाषेणैव प्रवर्तते न पुनर्ज्ञानमात्रात् । ततः पूर्णसम्यग्दर्शनज्ञानचारित्रस्यैवेति [3]जीवन्मुक्तेरपि त्रयात्मकादेव हेतोः सिद्धेः । संसारकारणं हि मिथ्यादर्शनादित्रयात्मकं न पुनर्मिथ्याज्ञानमात्रात्मकमिति । तथा मुक्तावपि अनेकान्तस्य निक्षेपात् । तत्र द्वेधाऽनेकान्तः क्रमानेकान्तोऽक्रमानेकान्तश्च । तत्राद्यो य एव प्रागमुक्तः स एव साम्प्रतं मुक्तः, तत स एव मुक्तः संसारी चेत्यविरोधः । अनेकान्ताभ्युपगमो निर्दोष एवेति । ततोऽनाद्यविद्याविजृम्भिताष्टकर्मसन्ततिप्रवाहविलयादनन्तदर्शनज्ञानसुखवीर्यप्रतिपत्तिस्वरूपे द्रष्टुर्भगवतः परमानन्देऽवस्थानं मोक्ष इति । ततो ह्यागमोक्तपञ्चदशविधसिद्धादन्यतमस्यापि सिद्धत्वम् , अविद्यानिर्मितलिङ्गस्य मोक्षप्रत्यूहे निर्हेतुकत्वात् सिद्धस्यात्मस्वरूपेऽवस्थानादिति ।

विषयस्तु मार्गस्य नवधा तत्त्वम्—"जीवाजीवपुण्यपापाश्रववन्धसंवरनिर्जरामोक्षास्तत्त्वम्" इति श्रुतधरवाचः । मार्गविषयत्वं तु तस्य निर्णयादेव प्रवृत्तेः नहि जीवस्यानिर्णये

१. पाप । २. अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभमिति अग्रेतन पदद्वयम् । ३. जीवतो मुक्तिर्यस्य तस्य केवलिन इत्यर्थः । ४. अज्ञानम् ।

तत्प्रवृत्तिरनिर्णीतस्यापवर्गार्थित्वासम्भवात् । तत्र ज्ञानस्यैव स्वपरसंवेदनस्वभाव-स्यान्वयिनो जीवत्वात् । तस्य तु क्रमानेकान्तनिरूपणेन निर्णयात् । नाप्यजीवस्य, तदा[1] तत्सम्बन्धस्य बन्धस्यानवगमेन [2]तद्वियोगाकाङ्क्षाऽनुत्पत्तेः । नाप्याश्रवस्य, पुण्यपापात्म-कस्य तन्निवर्तनद्वारेण शक्यनिवर्तनत्वानवगमेन कस्यचिदपि तन्निवर्तनायोद्यमानुपपत्तेः । नापि समितिगुप्तिपरीषहजयनिर्वेदप्रकर्षभावनात्मकसंवरस्य, सकामाकामनिर्जरामोक्ष-योर्वा,तदापि तस्य तन्निदानप्रत्यनीकत्वस्य तयोर्बन्धविश्लेपस्वभावत्वस्य मृदाद्युपलेप-विलयोद्भिद्यमाननीरसालावुवत् पूर्वप्रयोगनिःसङ्गत्वविस्रसोर्ध्वगमनस्वभावस्य भावस्य चानवगमेन तदनुपपत्तेः । तदेषां निर्णयस्तु सामान्यविशेषविषयात्मकप्रमाणेनानुवृत्त-व्यावृत्तप्रत्ययत्वेन स्याद्वादनिर्णिनीषूणाम् अविरोधतया साक्षात् प्रत्ययजनक-त्वादेव स्यात् । अन्यथैकान्तप्रक्रियाव्यामुग्धानां प्रतीत्यपलापः प्रादुर्भोभवीति प्रति-क्षणनिरन्वयविनाशाभ्युपगमादिति ।

तत्र सामान्यं द्विधा—तिर्यगूर्ध्वतासामान्यभेदात् । तत्र सदृशपरिणामस्तिर्य-[3]क्सामान्यं खण्डमुण्डादिषु गोत्ववत् । तथोक्तम्—

एकप्रत्यवमर्शस्य हेतुत्वाद्धीरभेदिनी ।
एकधीहेतुभावेन व्यक्तीनामप्यभेदता ॥ [प्रमाणवा० ३.१०८]

तदनभ्युपगमेनाह—

नो चेद् भ्रान्तिनिमित्तेन संयोज्येत गुणान्तरम् ।
शुक्तौ वा रजताकारो रूपसाधर्म्यदर्शनात् ॥ [प्रमाणवा० ३.४३]

इत्यादिविरोधानुषङ्गात् । तथा शवलधवलयोर्वर्णभेदोपचारेऽपि तत्रैकत्वोपचारः । तथाह्येकत्वं द्विविधं मुख्यमुपचरितं च । तत्र मुख्यमात्मादिद्रव्ये, सादृश्ये तूपचरितं चेति । तयोरभेदोपचारे सति सामान्यं न तु तेन समानोऽयमतो बाधबोधादि(धि)रूढत्वात् सिद्धं सदृशपरिणामभूतरूप वस्तुस्वरूपं सामान्य-मिति । तथाऽपरापरविवर्तव्यापिद्रव्यमूर्ध्वतासामान्यं मृदिव स्थासकोशकुसूलादिषु । तत्र पूर्वोत्तरविवर्तव्यतिरेकेणापरस्य तद्व्यापिनो द्रव्यस्यासत्त्वमिति न मन्तव्यं यतः प्रत्यक्षत एवार्थानामन्वयिरूपप्रतीतेः प्रतिक्षणविशरारुतया[5] स्वप्नेऽपि तत्र तेषां प्रतीत्यभावात् । किञ्च, यथैव पूर्वोत्तरविवर्तयोर्व्यावृत्तप्रत्ययाद-न्योऽन्यमभावः प्रतीतस्तथा मृदाद्यनुवृत्तप्रत्ययावस्थितिरपि तद्वदर्थग्राहिणी । क्षणिका बुद्धिश्चेदास्तां बुद्धेः क्षणिकत्वेऽपि प्रतिपत्तुरक्षणिकत्वात् । तथाहि प्रत्यक्षा-

---

१. तेन जीवेन सम्बन्धो यस्य । २. बन्ध ३. सामान्य । ४ पर्याय । ५. विनश्वरतया ।

दिसहायो ह्यात्मैवोत्पादव्ययध्रौव्यात्मकत्वं भावानां प्रतिपद्येत । यथैव हि घट-कपालयोर्विनाशोत्पादौ प्रत्यक्षसहायोऽसौ[1] प्रतिपद्यते तथैव मृदादिरूपतया स्थितिमपि । न चानन्तरातीतानागतक्षणयोः प्रत्यक्षस्य प्रवृत्तौ स्मरणप्रत्यभिज्ञानानुमानानां वैफल्यम्, तत्र तेषां साफल्यानभ्युपगमात् अतिव्यवहिते तदङ्गीकरणात् । न चाक्षणिकस्यात्मनोऽर्थग्राहकत्वे स्वगतबालवृद्धाद्यवस्थानामतीतानागतजन्मपरम्परायाः सकलभावपर्यायाणामेकदैवौ(वो)पलम्भप्रसङ्गः, ज्ञानसहायस्यैवार्थग्राहकत्वाभ्युपगमात्, तस्य च प्रतिबन्धकक्षयोपशमानतिक्रमेण प्रादुर्भावात् न परिकल्पितदोषानुषङ्गः । ततो यत्रैवास्य ज्ञानपर्यायप्रतिवन्धापायस्तत्रैव ग्राहकत्वनियमो नान्यत्रेत्यनवद्यम् । आत्मा प्रत्यक्षसहायोऽनन्तरातीतानागतपर्याययोरेकत्वं प्रतिपद्येतेति, स्मरणप्रत्यभिज्ञानसहायश्चातिव्यवहितपर्यायेष्वपि इति, चित्रमेचकसंशयज्ञानवद् युगपदेकस्यानेकाकारसम्बन्धित्वक्रमेणापि, तत्[2] तस्यौ[3]विरूद्धमिति सिद्धं परापरविवर्तव्याप्येकद्रव्यलक्षणमूर्ध्वतासामान्यमिति ।

तथा विशेषोऽपि द्विविधः — पर्यायव्यतिरेकभेदात् । तत्र पर्यायस्वरूपं निरूपयति । एकत्र द्रव्ये क्रमभाविनः परिणामाः पर्याया आत्मनि हर्षामर्षादिवत् । स चापेक्षापूर्वकारी । ततश्चित्रसंवेदनवदनेकाकारव्यापित्वेनात्मनः स्वसवेदनप्रत्यक्षसिद्धत्वात् । यद् वस्तु यथा वास्तवस्वभावेन प्रतिभासते तत् तथैव व्यवहर्तव्यम् , यथा वेद्याकारात्मकैकरूपतया प्रतिभासमानं सवेदनं सुखाद्यनेकाकारैकात्मतया प्रतिभासमानश्चात्मेत्यनुमानप्रसिद्धत्वात् । तथा च सुखदुःखादिपर्यायाणामन्योन्यमेकान्ततो भेदे च 'प्रागहं सुख्यासं संप्रति दुःखी वर्ते' इत्यनुसंधानप्रत्ययो वासना, सा तु न सुखादिभ्यो भिन्ना, तेभ्यै[4]स्तस्यौः[5] कथञ्चिद्भेदे[6] नाममात्रं भिद्येताहमहमिकया स्वसंवेदनप्रत्यक्षप्रसिद्धस्यात्मनः सहक्रमभाविनो गुणपर्यायानात्मसात्कुर्वतो वा वासनेति नामान्तरम् । क्रमवृत्तिसुखादीनामेकसन्ततिपतितत्वेनानुसंधानमित्यप्यात्मनः सन्ततिशब्देनाभिधानात् । तेषां कथञ्चिदेकत्वाभावेऽनेकपुरुषसुखादिवदेकसन्ततिपतितत्वस्याप्ययोगात् । आत्मनोऽनभ्युपगमे तु कृतनाशाकृताभ्यागमदोषानुषङ्गः । कर्तुर्निरन्वयनाशे हि कृतस्य कर्मणो नाशः, कुर्तुः फलानभिसम्बन्धादकृताभ्यागमश्चाकर्तुरेव फलाभिसम्बन्धात् । ततस्तद्दोषं परिजिहीर्षुणाऽऽत्मनोऽनुर्गमोऽभ्युपगन्तव्यः । न चाप्रमाणकोऽयं तत्स्वभावावेदकयोः स्वसवेदनानुमानयोः प्रतिपादनात् । तदहमेव ज्ञातवानहमेव वेद्मीत्यादेरेकप्रमातृविषयप्रत्यभिज्ञानस्यापि सद्भावात् । तथा च भट्टपादाः—

१. आत्मा । २ ज्ञानम् । ३. आत्मनः । ४. सुखादिभ्य । ५ वासनायाः । ६. अन्वयः ।

तस्मादुभयमानेन व्यावृत्त्यनुगमात्मकः ।
पुरुषोऽभ्युपगन्तव्यः कुण्डलादिषु सर्पवत् ॥इति॥ [श्लोकवा० आत्म०२८]

किञ्च, आत्मैव हि सुखदुःखादिपर्यायतया परिणमति नीलाद्याकारतया स्वपरग्रहणशक्तिद्वयात्मतयैकविज्ञानवत्[१] । न खलु ययैव शक्त्याऽऽत्मानं प्रतिपद्यते विज्ञानं तयैवार्थं तयोरभेदप्रसङ्गात्[२] । अन्यथा आत्मनो येन रूपेण सुखपरिणामस्तेनैव दुःखपरिणामोऽप्यनयोर्भेदो न स्यात् । न च तच्छक्तिभेदे तदात्मनो ज्ञानस्यापि भेदोऽन्यथैकस्य स्वपरग्राहकत्वं न स्यान्नापि चित्रज्ञानस्य नीलाद्यनेकाकारतया परिणामेऽप्येकाकारतया व्याघातस्तद्वत् सुखाद्यनेकाकारतया परिणामेऽप्यात्मनो नैकत्वव्याघातो विशेषाभावात् ।

तत्रार्थान्तरे विसदृशपरिणामो व्यतिरेकः । तथाह्येकस्मादर्थात् सजातीयो विजातीयो वाऽर्थोऽर्थान्तरं तद्गतोऽन्यादृशः परिणाम इति गोमहिषादिवत् । यथा गोषु खण्डमुण्डादिलक्षणो विसदृशपरिणामः, महिषेषु च विशालविसङ्कटत्वलक्षणः, गोमहिषेषु चान्योन्यमसाधारणस्वरूपलक्षण इति ।

ततः सामान्यविशेषयोः परापेक्षपरानपेक्षभेदेनानुवृत्तव्यावृत्तप्रत्ययलक्षणवस्तुधर्मार्थक्रियाकारित्वेनाभेदाद् वास्तवत्वं सिद्धमेव । न चार्थस्य सामान्यविशेषात्मकत्वेन ग्राहकप्रमाणाभावोऽनेकधर्मत्वात्। तथाहि—वास्तवानेकधर्मात्मकोऽर्थः, परस्परविलक्षणानेकार्थक्रियाकारित्वात् पितृपौत्रभ्रातृभागिनेयाद्यर्थक्रियाकारिदेवदत्तवत् । न चायमसिद्धो हेतुः, आत्मनो मनोज्ञाङ्गनानिरीक्षणस्पर्शनमधुरध्वनिश्रवणव्याहारचंक्रमणावस्थानहर्षविषादानुवृत्तव्यावृत्तज्ञानाद्यन्योन्यविलक्षणानेकार्थक्रियाकारित्वेनाध्यक्षतोऽनुभवात् । तथा दूरेतरदेशवर्तिनः पादपस्य पूर्वोत्तरप्रत्ययैकविषयत्वेऽपि सामान्यविशेषापेक्षया त्वस्पष्टेतरविषयभेदादेकान्तानुषङ्गभङ्गः प्रतीत एव यथा तन्तुपटयोरिवात्राभिन्नप्रमाणग्राह्यत्वेनावयवावयविगुणगुणिप्रभृतीनां कथञ्चिद्भेदाभेदप्रसिद्धेर्भिन्नप्रमाणग्राह्यत्वमसिद्धं यतस्तन्तव एवातानवितानीभूता अवस्थाविशेषविशिष्टाः पटो(ट उ)ल्लेखितस्ततो न तन्तुभ्योऽर्थान्तरं पट इति । प्रमाणं हि यथावस्तु विवेचकम् । यत्रात्यन्तभेदग्राहकं तत्र तत्रात्यन्तभेदो यथा घटपटमुकुटादौ, यत्र कथञ्चिद् भेदग्राहकं तत्र कथञ्चिद् भेदो यथा तन्तुपटादाविति, पूर्वोत्तरकालभावित्वाद्यप्यवस्थाभेदमेव तन्तूनां प्रसाधयति नात्यन्तिकभेदम् । अत्र तु वस्तुन आत्मानौ द्रव्यपर्यायौ, तयोर्भावः तादात्म्यम्, भेदात्मकत्वं वस्तुनो भेदः पर्यायतैव, अभेदस्तु द्रव्यरूपत्वमेव, भेदाभेदौ तु द्रव्यपर्यायस्वभावावेव । न खलु द्रव्यमात्रं पर्यायमात्रं वा वस्तु, उभयात्मनः समुदा-

१ स्वसंवेदनप्रत्यक्ष-अनुमानप्रमाणाभ्याम् । २. ज्ञानार्थयो ।

यस्य वस्तुत्वात्। द्रव्यपर्याययोस्तु न वस्तुत्व नाप्यवस्तुता किन्तु वस्त्वेकदेशत्वं यथा समुद्रांशो न समुद्रो नाप्यसमुद्रः किन्तु समुद्रैकदेश एव। न चात्र संशयादिदोषोपनिपातानुषङ्गावकाशः स्याद्वादप्रक्रियाप्रतीतेरभ्युपगमात्। इह किल भेदाभेदयोरप्रतीतौ चलितप्रतीतिः संशयः[1], साक्षात् प्रतीतौ तु स्थाणुत्वपुरुषत्वयोरचलितप्रतीतिरसंशय एव। तथा कथञ्चिदुक्तयोः सत्त्वासत्त्वयोरिव भेदाभेदयोर्विरोधासिद्धेः[2]। स्वद्रव्यादिकं निमित्तमपेक्ष्य भावप्रत्ययं जनयेदर्थः परद्रव्यादिकमपेक्ष्याभावमित्यन्योन्याव्यवच्छेदेनैकस्मिन्नाधारे भेदाभेदयोर्धर्मयोः सत्त्वासत्त्वयोर्वा प्रतिभासमानत्वात्। न सहानवस्था[न]लक्षणो विरोधः अन्धकारप्रकाशयोरिव। न चात्र व्य(व)ध्यघातकलक्षणो विरोधः फणिनकुलयोर्बलवदबलवतोरिव प्रतीतः सत्त्वासत्त्वयोर्भेदाभेदयोः समानबलत्वात्। अस्तु वा कथञ्चिद् विरोधः परस्परपरिहारस्थितिलक्षण कश्चित् सहैकत्राम्रफलादौ रूपरसयोरिवानयोः सम्भवतोरेव स्यान्न त्वसम्भवतोः सम्भवदसम्भवतोर्वा। किञ्चायं विरोधो धर्मयोर-

---

१. भेदाभेदात्मके वस्तुनि। २ भेदाभेदात्मके च वस्तुनोऽसाधारणकारणेन निश्चेतुमशक्तेरिति संशयः।

३. नाऽभेदो भेदरहितो भेदो वाऽभेदवर्जितः।
केवलोऽस्ति यतस्तेन कुतस्तत्र विकल्पनम्॥
येनाकारेण भेद. किं तेनासावेव वा द्वयम्।
असत्त्वात् केवलस्येह सतश्च कथितत्वत॥
यतश्च तत् प्रमाणेन गम्यते ह्युभयात्मकम्।
अतोऽपि जातिमात्रं तदनवस्थादिदूषणम्॥
एव ह्युभयदोषादिदोषा अपि न दूषणम्।
सम्यक् जात्यन्तरत्वेन भेदाभेदप्रसिद्धितः॥
तेनानेकान्तवादोऽयमज्ञै. समुपकल्पित.।
न युज्यते वचो वक्तुमिति न्यायानुसारिणः॥
अन्योन्यव्याप्तिभावेन द्रव्यपर्याययो. कथम्।
भेदो(दा)भेदो विरुद्धः स्यात् तद्भावानुपपत्तितः॥
नान्योन्यव्याप्तिरेकान्तभेदेऽभेदे च युज्यते।
अतिप्रसङ्गाच्चैक्याच्च शब्दार्थानुपपत्तितः॥
अन्योन्यमिति यद्भेद व्याप्तिश्चाह विपर्ययम्।
भेदाभेदे द्वयोस्तस्मादन्योन्यव्याप्तिसम्भव॥
एव शबलरूपेऽस्मिन् व्यावृत्त्यनुगमावपि।
स्याद्वादनीतित. सिद्धौ तथानुभवसुस्थितेः॥
इत्थं प्रमाणसिद्धेऽस्मिन् विरोधोद्भावन नृणाम्।
व्यसन धीजडत्वं वा प्रकाश[य]ति केवलम्॥

स्तु मातुलिङ्गद्रव्ये रूपरसादिवत्, न च धर्मधर्मिणोर्विरोधः। तथाविरोधे सति धर्मिणि धर्माणां प्रतीत्यपलापः स्यान्न चैवमस्तीति। अथ कथञ्चिद् विरोधस्तु सर्वत्र समान एव स्वस्य भावः स्वत्वमित्यादिवदिति। नापि वैयधिकरण्यम्, निर्बाधभेदाभेदयोः सत्त्वासत्त्वयोर्वा एकाधारतया प्रतीयमानत्वात्। नाप्युभयदोषश्चौरपारदारिकाभ्याम् चौरपारदारिकवज्जैनाभ्युपगतवस्तुनो जात्यन्तरत्वान्न तयोरन्योन्यनिरपेक्षयोर्यस्मादयं दोष[1], तत्सापेक्षयोरेव तदभ्युपगमात्, तथा प्रतीतेश्चेति। नापि सङ्करव्यतिकरौ[2] स्वरूपेणैवार्थे तयोः प्रतीतेः। नाप्यनवस्था, धर्मिणो ह्यनेकरूपत्वं न धर्माणा कथञ्चनेति वस्तुनो ह्यभेदो धर्म्येव, भेदस्तु धर्मा एव, तत्कथमनवस्थादौस्थ्यम्, अनादित्वात् प्रबन्धस्येति। अभावस्[3] तु प्रागेवापसारितत्वादर्थस्य स्वदेशादिषु सत्त्वं परदेशादिष्वसत्त्वम्। अत्रेतरेतराभाव इत्युन्मत्तप्रलपितम्। तथेतरेतराभावस्य[4] घटाभेदे तद्विनाशे पटोत्पत्तिप्रसङ्गात् पटाभावस्य विनष्टत्वात्। अथ घटादभिन्नोऽसौ तर्हि घटादीनामन्योन्यं भेदो न स्यात्। यथैव हि घटस्य घटाभावाद्भिन्नत्वात् घटरूपता तथा पटादेरपि स्यात्। नाप्येषां परस्पराभिन्नानामभावेन भेदः कर्तुं शक्यो भिन्नाभिन्नभेदकरणे तस्याकिञ्चित्करत्वप्रसङ्गात्। नापि भेदव्यवहारः कर्तुं शक्यः स्वहेतुभ्योऽसाधारणतयोत्पन्नाना सकलभावानां प्रत्यक्षेण प्रतिभासमानत्वादेव भेदव्यवहारस्यापि प्रसिद्धेरलमनर्थकप्रयासेनेति। प्रतिक्षिप्तश्चेतरेतराभाव इति सिद्धं भेदाभेदात्मकं सामान्यविशेषविषयात्मकमर्थज्ञानं प्रमाणमिति।

प्रमेयार्थभेदः पर्याप्तः। आस्तां तावन्निश्चितलक्षणेन प्रत्यक्षादिना सवादात् तद्विषये प्रामाण्यमागमस्य। ततोऽत्यन्तपरोक्षे तु जगत्सन्निवेशविशेषादौ कथं निर्णेतव्यम्? अतन्निर्णये तत्त्वज्ञानस्यापरिपूर्णतया निःश्रेयसनिबन्धनत्वाभावप्रसङ्गादिति नाशङ्कनीयम्। तद्विषयस्यापि प्रवचनस्य प्रत्यक्षादिना सवादबलादवधारितप्रामाण्यप्रवचनसमानकर्तृकतया निर्णयात्। न च निरवशेषनिर्धूतरागादिमळकलङ्कस्य सर्ववेदिनो भगवतः क्वचित् तथ्यामिथ्यावाक्व(ग्व)चनप्रवृत्तिः प्रतिपनीपद्यत। रागादिमत्त्वे च तदतज्ज्ञत्वमिथ्यादेरुपलम्भात् तत्र समानकर्तृकत्वमपि यतोऽत्यन्तपरोक्षार्थोद्योतिनः श्रुतभागस्य प्रत्यक्षाप्रसिद्धार्थोद्योतिश्रुतभागान्तरेण श्रुतान्तरवदवच्छिन्नाद् उपदेशपारम्पर्यादवगतेः। पदादि-

---

१. एकान्तेनैकात्मकत्वे योऽनेकस्वभावत्वाद् भावलक्षणो दोषः, अनेकात्मकत्वे चैकस्वभावत्वादभावलक्षण इत्युभयदोष'। २ सर्वेषा युगपत् प्राप्ति. सङ्कर., एकत्वानेकत्वयो परस्परविषयगमन व्यतिकर.। येन(येनैक)स्वभावता तेनाऽनेकस्वभावत्वस्यापि प्रसङ्गो येन चानेकत्वं तेनैकत्वस्यापि इति सङ्करप्रसङ्ग। ३ ततश्चाप्रतिपत्तितोऽभाव। ४ घट. पटो न भवति पटः घटो न भवति इति इतरेतराभावः इति।

रूपमेव प्रवचनं वर्णक्रमस्यैव पदादित्वात् तदन्यस्य स्फोटात्मनोऽप्रतिपत्तेः। इतरेतरदेशपरिहारावस्थायिनां कारकाणामप्येकत्र कार्ये यथास्वदेशं भावादिव वर्णानामपि यथास्वकालं विद्यमानत्वस्याविशेषादवश्यमेवमभ्युपगन्तव्यम्, इतरथा ताल्वादिपरिस्पन्दस्यापरापरसमयभाविनो ह्येकत्र पदादिस्फोटाभिव्यक्तावप्यनुपयोगित्वेनानर्थकत्वप्रसक्तेः। तथाहि न स्फोटात् स्वाधीनाभिव्यक्तिकादनभिव्यक्ता(व्यक्तिका)द्वाऽर्थप्रतिपत्तिस्ततो ह्यर्थप्रतिपत्तौ सर्वदा सर्वस्यापि ततस्तदापत्तेः।[1] ततो वर्णक्रमविनिवेशरूपमेव पदादिकम्। तस्य तु पौरुषेयत्वादुपपन्नं पुरुषगुणायत्तं तत्र प्रामाण्यम्। ततः शब्दस्यानित्यत्वेऽपि व्यवहारकालं यावदव्यवस्थितेरयमस्यार्थस्य वाचकः कथमिति नाशङ्कनीयम् तात्कालिकस्यैवास्य कालान्तरभाविनोऽपि तादृशतया समयविषयत्वादुपपद्यत एव तस्य व्यवहारोपयोगित्व यतो 'दैवरक्ताः किंशुकाः केन रज्यन्ते' इतिवत् सहजयोग्यतयैव शब्दार्थयोः प्रतिपाद्यप्रतिपादकशक्तिर्ज्ञाप्यज्ञापकशक्तिवदिति। ततो लौकिको वैदिको वा शब्द. सहजयोग्यतासमयवशादेवार्थप्रतिपादकः। कर्तव्यश्चेत्थमभ्युपगमः। किञ्च, वर्णानां परस्परापेक्षाणां निरपेक्षसमुदायः पदम्, पदना तु तदपेक्षाणां निरपेक्षः समुदायो वाक्यम्। अत्र तु निराकाङ्क्षत्व हि प्रतिपत्तृधर्मो वाक्येष्वध्यारोप्यते न पुनः शब्दधर्मस्तस्याचेतनत्वात्।[2] स चेत् प्रतिपत्ता तावतैवार्थं प्रत्येति किमित्यपरमाकाङ्क्षेत्। किञ्च, प्रतिपत्तुर्यावत्सु परापेक्षेषु पदेषु समुदितेषु निराकाङ्क्षत्वं तस्य तावत्सु वाक्यत्वसिद्धिरिति गम्यम्। तदित्थं कृतसमया ध्वनयोऽर्थाभिधायकाः। समयस्य तु सामान्यविशेषात्मकेऽर्थेऽभिहितत्वान्न[3] जात्यादिमात्रे, तथाभूतस्यार्थस्य वास्तवत्वात्। न चेहाप्यानन्त्याद व्यक्तीनामन्योन्याननुगमाच्च सङ्केताऽसम्भवः, समानधर्मसाकाङ्क्षत्वेन क्षयोपशमविशेषाविर्भूतोहाख्यप्रमाणेन तासां प्रतिभासमानतया सङ्केतविषयतोपपत्तेः, अन्यथा कथमनुमानप्रवृत्तिरिति। यच्च परैरप्यधायि शब्दस्यामूर्तस्यैव वीचितरङ्गन्यायेन श्रोत्रप्रदेशेऽभ्युपसर्पणम् इदमप्यर्द्धजरतीन्यायवाक्यं यदुक्तम्—

> शब्दस्यागमनं तावददृष्टं परिकल्पितम्।
> मूर्तिस्पर्शादिमत्त्वं च तेषामभिभवः सताम्॥
> त्वग्ग्राह्यत्वमन्ये च भागाः सूक्ष्माः प्रकल्पिताः।
> तेषामदृश्यमानानां कथं हि रचनाक्रमः॥ [श्लोक०शब्दनि० १०७—१०९]

इत्यादि तद्व्यञ्जकवाय्वागमनेऽपि समानम्, 'शब्द'स्थाने[4] वायुं पठित्वा तदागमनमपि तावददृष्टम्। इत्थमदृष्टकल्पनागौरवदोषानुषङ्गस्तत्पक्ष एव न चास्मत्पक्षे तत्रार्थे

१ स्फोटात् अर्थप्रतिपत्त्यापत्तेः। २. अचेतनत्वेनाकाङ्क्षाविकलत्वात्। ३. सामान्यविशेषात्मकस्य। ४. 'शब्दस्यागमनं तावद्' इत्यत्र 'वायोरागमनं तावद्' इति।

शब्दस्य गुणत्वामूर्तत्वतिरस्कारात्र भ्रूमः। न च भित्तिपटाद्यधिकरणव्यतिरेकेण चित्रादिरचनाक्रमः संजाघटीति वर्णादिसाधर्म्यवैधर्म्याद्यनुपपत्तेस्ततस्तमपि प्रमाणयामः। तथाहि—पुद्गलद्रव्यं शब्दः, स्पर्शाल्पत्वमहत्त्वपरिमाणसंख्यासंयोगगुणाश्रयत्वात्, यद्यदीदृशं तत्तत् पुद्गलद्रव्यम् यथा बदरामलकादि, तथा शब्दः, तस्मात् पुद्गलद्रव्यमेव। न चास्य स्पर्शाश्रयत्वमसिद्धम्। तथाहि—स्पर्शवान् शब्दः, स्वसम्बद्धार्थान्तराभिघातहेतुत्वात् मुद्गरोपलादिवत्, सुप्रतीतो हि कंसतालडिण्डिमादिनाऽभिसम्बन्धेन श्रोत्राद्यभिघातस्तत्कार्यस्य वाधिर्यादेः प्रतीतेः, न चास्यास्पर्शवत्त्वेन स्यात् न वायुना शब्दसहचरितेन तदभिघातः, तस्य तु शब्दाभिसम्बन्धान्वयव्यतिरेकानुविधायित्वात्। न चास्याल्पत्वमहत्त्वपरिमाणाश्रयत्वमसिद्धमल्पमहत्त्वप्रतीतिविषयत्वात् बदरादिवत्, तथा चाल्पः शब्दो मन्दो महान् पटुस्तीव्र इत्यादिप्रत्ययेनाल्पमहत्त्वम्। नापि संख्याश्रयत्वमसिद्धमेको द्वौ बहवः शब्दा इति संख्यावत्त्वप्रतीतेर्घटादिवत्। नापि संयोगाश्रयत्वमसिद्धं वाय्वादिनाऽभिहन्यमानत्वात् पांश्वादिवत्, संयुक्ता एव पांश्वादयो वायुनान्येन चाभिहन्यमाना दृष्टाः, तेन तदभिघातश्च, देवदत्तं प्रत्यागच्छतः शब्दस्य प्रतिवातेन प्रतिनिवर्तनात् पांश्वादिवत् तदप्यन्यदिगवस्थितेनैव श्रवणात्। ततः सिद्धं गुणवत्त्वाद् द्रव्यत्वं शब्दस्य। किञ्च, आकाशगुणत्वे शब्दस्यास्मदादिप्रत्यक्षता न स्यादाकाशस्यात्यन्तपरोक्षत्वात्, तथा पराभ्युपगतशब्द इति। ततः शब्दस्याकाशगुणासिद्धिः। तथा च द्रव्यत्वं शब्दस्य क्रियावत्त्वाद् बाणादिवदिति, न चासिद्धं, निष्क्रियत्वे तु तस्य श्रोत्रेणाग्रहणमनभिसम्बन्धात्, तथापि ग्रहणे श्रोत्रस्याप्राप्यकारित्वं स्यात्। अत आकाशस्य निष्क्रियत्वाद् द्व्यणुकादिद्रव्यविवर्तेनेव क्रियात्वस्य परिकल्पनम् उपपन्नम्। ततो हि पुद्गलविवर्तः शब्दः करणाधीनज्ञानवेद्यत्वाद् घटादिसंस्थानवत्। न च तोयादिना तद्वेद्यत्वे सत्यपि पुद्गलविवर्ताभावत्वेन व्यभिचारः, तत्राप्यनभिव्यक्तस्य गन्धादेः स्पर्शवत्त्वादेव लिङ्गात् पृथिव्यामिव प्रतिपत्तेः, अनुद्भूतस्वभावत्वाच्च हेम्न्युष्णस्पर्शवदनुपलम्भस्याप्यविरोधात् पृथिव्यादिरूपतया चातुर्विध्यस्यापि धारणद्रवोष्णेरणरूपतया पुद्गलत्वाविशेषेऽप्युपपत्तेः। तन्न परपरिकल्पितोऽयं नियमो घटामटाट्यते यत्—आपो रूपरसस्पर्शवत्य एव, तेजो रूपस्पर्शवदेव, वायुस्तु स्पर्शवानेवेति। नापि सामान्यैः कर्मभिर्व्यभिचारः, सामान्यादीनां तद्वतो भेदेऽपीन्द्रियवेद्यत्वस्याप्रतिवेदनात्, अभेदे तु तद्वतः पुद्गलतया तद्विवर्तनत्वेन तेषु सपक्षस्यैव भावात्। अथ च परिणामिन्येवार्थे यथोक्तम् कर्मोपपद्यते न चेदमप्यनर्थान्तरम्। तथा श्रोत्रशष्कुलीविवरपरिच्छिन्नो

१. वायुना शब्दाभिघातः। २. तथाहि येऽत्यन्तपरोक्षगुणिगुणा न तेऽस्मदादिप्रत्यक्षाः यथा परमाणुरूपादयः।

नभसः प्रदेश एवामूर्तिमदिन्द्रियमित्यपि न हृदयङ्गम्, तस्य तु वास्तवत्वे कार्यत्वे च नभसः कलशादिवदनित्यत्वप्रसङ्गात्, काल्पनिकस्य तु व्योमकुसुमादिवदिन्द्रियत्वानुपपत्तेः । ततोऽस्तु क्षयोपशमस्वभावशक्तिविशेषाध्यासितजीवप्रदेशाधिष्ठितस्य शरीरावयवस्यैव श्रोत्रत्वम्, तत्संस्पर्शनेनैव शब्दस्य श्रवणमिति । न तस्येन्द्रियान्तरात् कश्चन विशेषः । न चाप्राप्यकारित्वं श्रोत्रस्य । तथाहि—प्राप्यकारि श्रोत्रम्, प्रत्यासन्नग्राहित्वात्, यन्नैवं न तदेवम्, यथा नयनम् तथा श्रोत्रमिति प्राप्यकारित्वस्य व्यवस्थापनात् । प्रत्यासन्नग्राहित्वं तत एव । तद्विवरवर्तिनः कीटकादिध्वानस्याप्रतिपत्तेः साधनव्यावृत्तिश्च नयनात् ततोऽञ्जनादेस्तदगतस्याप्रतिवेदनादप्राप्यकारित्वेन प्रवचने निरूपितत्वात्। एकश्रोत्राविष्टस्येव वर्णस्यान्यैरपि श्रवणं पौद्गलिकत्वेन नाशङ्कनीयम्, वर्णस्य तु नानादिगभिमुखप्रवृत्तिकसाधारणानेकस्वरूपतयैव स्वहेतुबलतो गन्धवदेव प्रादुर्भावात् । ततस्ताल्वादिव्यापारजन्मनो ध्वनिविशेषस्य घटस्य चक्रादिव्यापारजनुष इवानित्यस्याप्येवमेव समयविषयतया वर्णाभिव्यक्तावुपयोगात् । नैवं प्रवचनस्यापौद्गलिकत्वपरिकल्पनमुपपन्नम् । तथा श्रीमदाप्तप्रणीतागमः —

सद्दंधयार-उज्जोओ पभा छायातवेइ य ।

वण्णरसगंधफासा पुग्गलाणं तु लक्खणं ॥ [उत्त० २८.१२]

इति प्रवचनप्रतिपन्नत्वाच्चतुरस्रं सिद्धं पौद्गलिकत्वमिति । ततः स्थितं भूतभवद्भाविभावाधिष्ठानयोः अनयोरनैकान्तपरिणामयोः मार्गतद्विषययोश्च प्रतिपादकं प्रवचनमविसंवादभावात्, तद्भावस्य च निरूपितत्वात् प्रमाणमिति । प्रमाणतदाभासलक्षणमुद्दिश्य विनेयानामविकलव्युत्पत्तये सप्तभङ्गीं निदर्शयामो यतः प्रमाणमप्यनेकान्तादौ तत्प्रत्यनीकधर्मसप्रतिपक्षे विद्यमाने सप्तभङ्गीमनुवर्तते । तद्यथा—स्यादनेकात्मैव भावः, स्यादेकात्मैव, स्यादुभयात्मैव, स्यादवक्तव्य एव, स्यादनेकात्म(माऽ)वक्तव्य एव, स्यादेकात्माऽवक्तव्य एव, स्यादुभयात्माऽवक्तव्य एव । तद्विषयवस्तुधर्मस्य सप्तविधत्वेनैव सप्तभङ्गोपपत्तेः प्रतिपाद्यप्रश्नानां तावतामेव सम्भवनियमात् । तथाहि — एकात्मनस्तत्प्रतिपक्षस्यापि प्रत्येकमुभयोः क्रमेण युगपच्च प्रतिपित्सायामाद्या विकल्पचतुष्टयी। आद्यविकल्पत्रयस्य क्रमेणावक्तव्येन सह बुभुत्सायामितरविकल्पत्रयीति । अनेकान्तस्येत्थं युक्तिरविरुद्धा तथायुक्तिसद्भावात् यथा 'चलाचलात्मकं वस्तु, कृतकाकृतकात्मक-

१. प्राप्यकारित्वादेव । २. 'वर्णस्यैकस्मिन् श्रोत्रे आविष्टत्वे सत्यपि पुनर्यत्र वर्णं तदपौद्गलिकत्वादेव युक्तम् पौद्गलिकत्वे तु एकस्मिन्नेव श्रोत्रे समाप्तत्वात् कथमन्येषा श्रवणीयम्' इति नाशङ्कनीयम् । तत्राह वर्णस्येति । ३ शब्दोऽन्धकारं उभयत्र सुपो लुक् । उद्योतो रत्नादिप्रकाश । प्रभा चन्द्रादिरुचि । छाया शैत्यगुण । आतपो रविबिम्बजनित उष्णप्रकाश ।

त्वात्' इति । न चायमसिद्धो हेतु, प्राच्यरूपत्यागाविनाभाविपररूपोत्पादस्यापेक्षितपरव्यापाररूपेण कृतकत्वसिद्धेः, सदास्थास्नुस्वरूपस्यानपेक्षितपक्षापरत्वेनाकृतकत्वनिश्चयात् । तदुत्पादव्ययध्रौव्यसमुदितं सदिति । तथा 'गुणपर्यायवत् द्रव्यम्' [तत्त्वार्थसू० ५.३८] इत्यपि । न चात्रोत्पादादीनां कथञ्चिद्भिन्नलक्षणत्वं विरुद्धम्, परस्पराऽनपेक्षत्वे तु वियदम्भोजवत् केवलस्य त्ववस्तुतापत्ते । तथाहि नोत्पादः केवलः स्थितिव्ययहीनत्वाद् वियदम्भोजवत्, न च स्थितिः केवला व्ययोत्पादहीनत्वात् तद्वत् । व्ययः केवलोऽपि न स्थित्युत्पत्तिहीनत्वात् तद्वदेवेति योजनात् । सामर्थ्यादेव त्रिरूपकलित सदिति मन्यामहे । तदन्यतमापाये सत्त्वस्याप्यनुपपत्तेः । उक्तं च —

घटमौलिसुवर्णार्थी नाशोत्पादस्थितिष्वयम् ।
शोकप्रमोदमाध्यस्थ्यं जनो याति सहेतुकम् ॥ [आप्तमीमांसा ५९]

यतो घटं भङ्क्त्वा मौलिनिर्वर्त्तने घटार्थिन. शोकस्य, मौल्यर्थिनः प्रमोदस्य मौल्युत्पादनिमित्तत्वात्, सुवर्णार्थिनो माध्यस्थ्यस्य हेमस्थितिहेतुकत्वात् सहेतुकमिति । तत' सदसतो विधिप्रतिपेधाभ्यामेव भावाभावत्वं कथञ्चिदेव न सर्वथा । उक्तं च—

द्रव्याद्यन्तरभावेन निपेध' सञ्ज्ञिनः सत' ।
असद्भेदो न चावस्तु स्थानं विधिनिपेधयो' ॥ [आप्तमीमांसा ७४]

ततोऽत्राभावस्य भावान्तरस्वभावेनावभासनम्, स्वरूपसिद्धस्य घटस्य घटान्तररूपेणाघटत्ववत्, वस्तुनोऽपि वस्त्वन्तररूपेणैवावस्तुत्वप्रतिपत्तेः, परस्परपरिहारस्थितत्वादेव । भावव्यतिरेकिभिः शब्दैरपि भावाभिधानान्नासमञ्जसस्वरूप तत्त्वमिति । अन्यथा तु पराभ्युपगतमनभिलाप्यमेव । उक्तं च—

अवस्त्वनभिलाप्यं स्यात् सर्वान्तैः परिवर्जितम् ।
वस्त्वेवावस्तुतां याति प्रक्रियाया विपर्ययात् ॥ [आप्तमीमांसा ४८]

---

१ सत् द्रव्यलक्षणमिति । यत् सत् तद् द्रव्यमित्यर्थ. । यद्येव तदेव तावद् वक्तव्य किं सदिति ? अत आह–उत्पादव्ययध्रौव्ययुक्त सत् । चेतनस्याचेतनस्य द्रव्यस्य स्वाजातिमजहत. उभयनिमित्तवशाद्भावान्तरावाप्तिरुत्पादनमुत्पादः मृत्पिण्डस्य घटपर्यायवत्, तथा पूर्वभावविगमनं व्यय यथा घटोत्पत्तौ पिण्डाकृते । अनादिपारिणामिकस्वभावेन व्ययोदयाभावात् ध्रुवति स्थिरीभवतीति ध्रुव । ध्रुवस्य भाव कर्म वा ध्रौव्य यथा मृत्पिण्डाद्यवस्थासु मृदाद्यन्वयात् । तैरुत्पादव्ययध्रौव्यैर्युक्त उत्पादव्ययध्रौव्ययुक्त सदिति । आह भेदे सति युक्तशब्दो दृष्टः यथा दण्डेन युक्तो देवदत्त इति । तथा सति तेषां त्रयाणां तैर्युक्तस्य द्रव्यस्य चाभाव प्राप्नोति । नैष दोष, अभेदेऽपि कथञ्चिद्भेदनयापेक्षया युक्तशब्दो दृष्ट' यथा सारयुक्त. स्तम्भ इति । तथा सति तेषामविनाभावात् सद्व्यपदेशो युक्त । समाधिवचनो वा युक्तशब्दः युक्तः सम हित तदात्मक इत्यर्थ । उत्पादव्ययध्रौव्यात्मकमिति यावत् । एतदुक्तं भवति उत्पादादीनि द्रव्यस्य लक्षणानि, द्रव्य लक्ष्यम् । तत् पर्यायार्थिकनयापेक्षया परस्परतो द्रव्याच्चार्थान्तरभाव । द्रव्यार्थिकनयापेक्षया व्यतिरेकेणानुपलब्धेः अनर्थान्तरभाव इति लक्ष्यलक्षणभावसिद्धिरिति । [सर्वार्थसिद्धि ५ ३०]

इति तत्र परिणामोऽप्यनैकात्मैव योजयितव्यः यतो द्रव्यस्य लक्षणं गुणपर्ययवत्त्वम्, क्रमाऽक्रमभाविविचित्रपरिणामाभावे द्रव्यस्य लक्षितुमशक्तेः, द्रव्यापाये गुणपर्यायत्वस्यानुपपत्तेः । कार्यद्रव्ये घटादिविशिष्टे गुणत्वस्य भावान्नवपुराणादिपर्याययोगित्वस्य च भावान्नाव्याप्तिर्लक्षणस्य, नाप्यतिव्याप्तिः स्पर्शादिसामान्येषु सहभाविगुणेषु स्पर्शादिविशेषेषु च क्रमभाविपर्यायेष्वभावात् । तथा पर्यायस्य तद्भावो लक्षणम् । 'तद्भावः परिणामः' [तत्त्वार्थसूत्र ५.४१] इत्युक्तः । तेन तेन प्रतिविशिष्टरूपेण भवनं परिणामः ॥ तथा च द्रव्यमेकम्, अनेके पर्याया इत्यत्र सम्यगेकान्तस्यानेकान्तेन विरोधाभावान्नयार्पणादेकान्तस्य प्रमाणार्पणादनेकान्तस्योपदेशादेकमप्यनेकमनेकमप्येकमिति न विरुद्धम् । उक्तं च—

द्रव्यपर्याययोरैक्यं तयोरव्यतिरेकतः ।
परिणामविशेषाच्च शक्तिमच्छक्तिभावतः ॥
[1]संज्ञासंख्याविशेषाच्च स्वलक्षणविशेषतः ।
प्रयोजनादिभेदाच्च तन्नानात्वं न सर्वथा ॥ [आप्तमीमांसा ७१–७२]

तदित्थं वस्तुपर्यायावेकं वस्तु प्रतिभासभेदेऽप्यव्यतिरिक्तत्वाद् वेद्यवेदकज्ञानवत् । तथाहि—न केवलं द्रव्यमर्थक्रियानिमित्त क्रमयौगपद्यविरोधात् केवलपर्यायवत् । पर्यायो वा न केवलोऽर्थक्रियाहेतुः, तत एव केवलद्रव्यवत् । क्रमयौगपद्यविरोधोऽसिद्धो न मन्तव्यः, अनेकपर्यायात्मन एव द्रव्यस्य तदुपलम्भात् अव्यतिरिक्तत्वमैक्यमेव, कथञ्चिदप्यशक्यविवेचनत्वात् । भेदोऽपि परस्परसंज्ञासंख्यादिभिन्नलक्षणात् । तथा द्रव्यस्यानाद्यनन्तैकवैस्रसिककालत्रयवर्तिपरिणामित्वात्, पर्यायस्य च साद्यन्ताऽनेकस्वभावतत्कालगोचरपरिणामत्वात् । द्रव्यस्य चैकत्वान्वयत्वं पर्यायस्यानेकत्वव्यावृत्तिप्रत्ययवत्त्वादन्योन्यविविक्तस्वभावत्वं स्वयमसाधारणं लक्षणं तद्विशेषो वा लक्ष्याऽविनाभावित्वमिति नानात्मकमेकं वस्तु सिद्धम् सर्वथा भिन्नयोर्द्रव्यपर्यायत्वासम्भवात् सह्यविन्ध्यवत् तयोरविरोधस्तु मेचकादिज्ञानवदिति । उक्तं च—

त्यक्तात्यक्तात्मरूपं यत् पूर्वापूर्वेण वर्त्तते ।
कालत्रयेऽपि यद् द्रव्यमुपादानमिति स्मृतम् ॥

---

१ एगत्त च पुहत्तं च संखा सठाणमेव य ।
सजोगा य विजोगा य पज्जवाण तु लक्खण ॥ [उत्त० २८ १३]

एकत्वं भिन्नेष्वपि परमाण्वादिषु यदेकोऽयं घटादिरिति प्रतीतिहेतुः, पृथक्त्वं चायमस्मात् पृथगिति प्रत्ययनिबन्धनम्, सख्या यत एको द्वौ त्रय इत्यादिका प्रतीतिरुपजायते, संस्थानमेतत् परिमण्डलोऽयमित्यादिनिबन्धनमेवेति, पूरणे च सर्वत्र, समुच्चये सयोगोऽयमनयोः सयोग इत्यादिव्यपदेशहेतुर्वा, विभागश्चायमितो विभक्त इति बुद्धिहेतवः । उभयत्र व्यक्त्यपेक्ष बहुवचनमुपलक्षणत्वात् नवपुराणादीनि पर्यायाणाम् । तु पूरणे, लक्षणमभिधानम् ।

व्यतिरेकेण

यत् स्वरूपं त्यजत्येव यन्न त्यजति सर्वथा ।
तन्नोपादानमर्थस्य क्षणिकं शाश्वतं यथा ॥ इति

ततो न्यायप्राप्तस्यानभ्युपगमायोगात् ततोऽनेकपरिणामपरिणतत्वे द्रवद्द्रव्यत्वमिति व्युत्पत्तेः सूक्तं द्रव्यलक्षणं त्रिरूपात्मकं सदित्यस्याप्यदूषितत्वादिति । तथा चोक्तम्—

विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषाम् ।
[2]अवाच्यतैकान्तपक्षेऽपि नावाच्यमिति युज्यते ॥ [आप्तमीमांसा ५५]

किञ्च, सकलं वस्तु व्यंञ्जनपर्यायात्मतया वाच्यमर्थपर्यायात्मतयाऽवाच्यमिति स्याद्वादवादिनाम्, ततोऽन्यथा प्रमाणाभावात् । तदेवमेव स्यात् सत्, स्यादसत्, स्यात् सदसत् स्याद्वादमिति कथञ्चिद्भेदेनाभ्युपगमात् ।

न सामान्यात्मनोदेति न व्येति व्यक्तमन्वयात् ।
व्येत्युदेति विशेषात् ते सहैकत्रोदयादि सत् ॥ [आप्तमी० ५७]

स्यात् सदित्यस्य सकृदपि विरुद्धधर्माध्यासानिराकृतेस्तद्व्यतिरेकेण चोक्तम्—

यद्यसत् सर्वथा कार्यं तन्मा जनि खपुष्पवत् ।
मोपादाननियमोऽभून्नाश्वासः कार्यजन्मनि ॥

तदिति भङ्गनिर्णयनियमेन परिणामादावपि भङ्गसप्तकमुन्नेतव्यम् । न चेत्थं विकल्पान्तरं सपनीपद्येत । तथा च प्रथमादेर्द्वितीयादिना योगे तृतीयाद्यन्तर्भावस्य बहुलं न पुनरुक्तादिदोषोपनिपातः । तथा च सप्तभङ्गीप्रसादेन शतभङ्ग्यपि जायते । ततः प्रकृत-

---

१-न च भिन्नाधिकरणे नित्यत्वानित्यत्वे द्रव्यपर्याययोर्भेदाभेदोपगमादन्यथोभयोरप्यसत्त्वापत्तेः तथाहि—शशथते ववतु परपरिकल्पित द्रव्यमसन् पर्यायव्यतिरिक्तत्वात् बालत्वादिपर्यायशून्यवन्ध्यासुतवत् तथा परपरिकल्पिता पर्याया असन्तो द्रव्यव्यतिरिक्तत्वात् वन्ध्यासुतगतबालत्वादिपर्यायवत्। उक्त च—

द्रव्य पर्यायवियुत पर्याया द्रव्यवर्जिता. ।
क कदा केन किंरूपा दृष्टा मानेन केन वा ॥

इह द्रव्यास्तिकनयवादी स्वमतप्रतिष्ठापनार्थमेवमाह—नात्यन्तसत उत्पाद. नापि सतो विद्यते विनाशो वा, 'नासतो विद्यते भावो नाभावो विद्यते सत ' इतिवचनात, यौ तु दृश्यते प्रतिवस्तु उत्पादविनाशौ तदाविर्भावतिरोभावमात्र यथा सर्पस्य उत्फणत्वाविफणत्वे, तस्मात् सर्वं वस्तु नित्यमिति द्रव्यपर्याययो सर्वथा भिन्नत्वाङ्गीक्रियमाणे किं द्रव्यम् कः कस्य पर्याय. [3] न हि सह्यो विन्ध्यस्य पर्यायो भवितुमर्हति भिन्नत्वात् ।

२. अवाच्यतैकान्ते युक्तिः । ३. स्थूल । ४ सूक्ष्म ।

धर्मविधिप्रतिषेधाभ्यामेव दोषानुपपत्तेः। जीवाजीवादिभावानुविद्धानेकधर्मविधिप्रतिषेधबलावलम्बेन सहस्रभङ्ग्यादेरपि सम्भवात् तत एवकारोऽन्ययोगव्यवच्छेदार्थमखिलमनेकात्मैव, नान्यथेत्येवमन्यविकल्पेष्वपि। तदत्राप्येवकारप्रयोगो निर्दोष एव। तदप्यनेकात्मत्वं भावस्य स्यात् कथञ्चिद्धर्मरूपेणैव, न धर्मिरूपेण, तस्यैकस्यैव शब्दादिरूपस्य प्रतीतेः; एकात्मत्वमपि धर्मिरूपेण, न धर्मरूपेण, शब्दादेरप्यनित्यत्वकृतकत्वप्रयत्नानन्तरीयकत्वाद्यनेकरूपधर्मस्यैकस्यैव प्रतिपत्तेः। इत्थमुभयात्मकत्वमपि स्वगताभ्यामेव धर्मधर्मिभ्यां क्रमबुभुत्साविषयाभ्यां न भावान्तरगताभ्याम्, अवक्तव्यमपि ताभ्यां युगपत् बुभुत्साविषयाभ्यां न क्रमेण नापि पदान्तरेण शतृशानयोरिव युगपदनेकपदे वक्तव्यत्वासम्भवादवक्तव्यमिति लक्षणोद्देशोऽन्यत्राऽप्यूह्यः। स्यान्निपातोऽतिप्रसङ्गनिवृत्त्यर्थः। ततः प्रश्नवशादेकवस्तुन्यविरोधेन विधिप्रतिषेधकल्पना सप्तभङ्गी प्रमाणमिति। न च कल्पनेयं कल्पनामात्रैव साक्षाद्वस्तुविवेचनक्षमा बुद्धिरेवान्तर्बहिःस्वरूपापेक्षयाऽनभिलाप्याऽभिलाप्यस्वभावकल्पना तस्याः स्याद्वादविद्वेषे सत्येवानुपपत्तेरिति उक्ता प्रमाणसप्तभङ्गी। अथ विकलज्ञानस्य तु नयाधीनत्वान्नयवशाद् विकलादेश इति प्रज्ञप्ते नयनयाभासस्वरूप निरूपयन्नाह--अनिराकृतप्रतिपक्षो वस्तुमात्रांशग्राही प्रतिपत्तुरभिप्रायो नयः, निराकृतप्रतिपक्षस्तु नयाभास इति द्वयोः सामान्यलक्षणम्। स द्विभेदो द्रव्यार्थिकपर्यायार्थिकभेदात्। तत्र द्रव्यमेव पर्याय एव वार्थो विषयो यस्येति व्युत्पत्तेर्नयविशेषलक्षणम्। तत्राद्यो नैगमसंग्रहव्यवहारविकल्पात् त्रिधा, द्वितीयस्तु ऋजुसूत्रशब्दसमभिरूढैवंभूतविकल्पाच्चतुर्विधः[1]। तत्रानिष्पन्नार्थसंकल्पमात्रग्राह्यविशुद्धविशुद्धेतरभावेन प्रधानोपसर्जनतया नैगमो नैकगमो वा[2]। निगमो हि संकल्पस्तत्प्रयोजन इति व्युत्पत्तेः प्रस्थानाद्युदाहरणेन विवृणोति। तद्यथा—कश्चित् पुरुषो गृहीतपरशुर्वनं गच्छन् केनचिदनुयुक्तः 'किमर्थं भवान् गच्छति ?' इत्यविशुद्धनैगमवाद्याह—'प्रस्थानमानेतुम्' इति तावदुपक्रमादाप्रस्थनिष्पत्तेर्विशुद्धतरनैगमस्य 'प्रस्थ एव' इति तद्वदेधोदकाद्याहरणे व्याप्रियमाणोऽनुयुक्तः 'किं करोति भवान्' स चाह—'ओदनं पचामि' इति, न

१. अर्थसंकल्पमात्रस्य ग्राहको नैगमो नयः। प्रस्थौदनादिकस्तस्य विषयः परिकीर्त्तितः ॥१॥
भेदानैक्यमुपानीय स्वजातेरविरोधकः। समस्तग्रहणं यः स्यात् स नयः संग्रहो मतः ॥२॥
संग्रहेण गृहीतानामर्थानां विधिपूर्वकम्। व्यवहारो भवेद्यस्माद् व्यवहारनयः स च ॥३॥
ऋजुसूत्रः स विज्ञेयो येन पर्यायमात्रकः। वर्तमानैकसमयो विषयः परिगृह्यते ॥४॥
लिङ्गसाधनसंख्यानां कालोपग्रहयोस्तथा। व्यभिचारनिवृत्तिः स्याद्यतः शब्दनयो ह्यसौ ॥५॥
नयः समभिरूढोऽसौ शब्दो यः विषयो स हि (?)। कोऽस्मिन् समभिरूढोऽर्थो नानार्थान् समतीत्य यः (?)
२. निगम्यते विविक्तं परिच्छिद्यन्ते इति निगमाः घटादयः, तेषु भवो नैगमः अथवा सामान्यविशेषात्मकस्य वस्तुनो न एकेन प्रकारेण गमः परिच्छेदो नैकगमः।

चासौ प्रस्थस्यौदनस्य वा पर्यायो निष्पन्नस्तन्निष्पत्तये सकल्पमात्रेऽपि प्रस्थादिव्यवहारात् । नैकगमं तु व्युत्पादयन्नाह—धर्मयोर्धर्मिणोर्धर्मधर्मिणोः प्रधानोपसर्जनतया विषयीकरणाद्वा नैकगमः । 'तत्थ—णेगेहिं माणेहिं मिणइ त्ती णेगमस्स निरुत्ती' इत्यागमोक्तेः, [अनुयोगद्वार ६०६] यथा 'पुद्गलद्रव्यपर्यायः शब्दादिः' अत्रोपसर्जनत्वं पुद्गलस्य गौणत्वात् सामान्याऽजहद्वृत्तिविशिष्टविशेषणत्वाच्च शब्दादेस्तु प्राधान्यं विशेष्यत्वादिति । 'शब्दादिधर्मात्मकं पुद्गलं द्रव्यं च' इत्यत्र पुद्गलद्रव्यस्य मुख्यत्वं शब्दादेर्गौणत्वमिति । तत्रेत्थमस्य प्रमाणात्मकत्वानुषङ्गः, धर्मधर्मिणोः प्रधानतया तत्र ज्ञप्तेरसम्भवात्, तयोरन्यतर एव हि नैकगमप्रधानतयाऽनुभूयते प्राधान्येन, द्रव्यपर्यायद्वयात्मकमर्थमनुभवद्विज्ञानं प्रमाणं प्रतिपत्तव्यं नेतरदिति । सर्वथा द्रव्यपर्याययोरर्थान्तरत्वाभिसन्धिर्नैगमाभासः, यथार्थस्यात्मनः सामान्यविशेषात्मकज्ञानेऽर्थान्तरभूते इति । स्वजात्यविरोधेनैकत्वमुपनीयार्थानाक्रान्तभेदान् समस्तग्रहणात् सग्रहः । स च परापरविकल्पाद् द्विविधः । तत्राद्यः सकलभावानां सदात्मनैकत्वमभिप्रैति 'सर्वमेकं सदविशेषात्' इति, सदिति वाग्विज्ञानानुवृत्तिलिङ्गानुमितसत्तात्मकत्वमेकत्वमशेषार्थानां सगृह्यते, निराकृता(तवि)शेषस्तु सत्ताद्वैताभिप्रायस्तदाभासो दृष्टेष्टबाधनात् । तथापरः सग्रहो द्रव्यत्वेनाशेषद्रव्याणामेकत्वमभिप्रैति द्रव्यमित्युक्तेर्भूतभवद्भविष्यत्समयवर्त्तिविवक्षितपर्यायद्रवणशीलानां जीवाजीवतद्भेदप्रभेदानामेकत्वेन संग्रहः । किञ्च, घट इति सकलघटव्यक्तीनां घटत्वेनैकत्वसङ्ग्रहः । सामान्यविशेषाणां सर्वथाऽर्थान्तरत्वानार्थान्तरत्वाभिप्रायोऽपरसङ्ग्रहाभासः प्रत्ययापलापादिति । सङ्गृहीतार्थानां विधिपूर्वकमवहरणं भेदेन निरूपणं व्यवहारः । सर्वं सदित्यस्य विभागमभिप्रैति 'यत् सत् तद् द्रव्यं पर्यायो वा' सर्वद्रव्याणि द्रव्यमिति सर्वपर्यायांश्च पर्याय इत्यपरस्ततो व्यवहारो विभजति 'यद् द्रव्यं तज्जीवाजीवादि षड्विधम्', 'यः पर्यायः स द्वेधा—सहभावी क्रमभावी च' इति परापरसङ्ग्रहव्यवहारप्रपञ्चः । न चास्यैवं नैगमत्वानुषङ्गः सङ्ग्रहविषयप्रविभागपरत्वात्, नैगमस्य तु प्रधानतोपसर्जनतोभयविषयीत्वात् । यस्तु कल्पनारोपितद्रव्यपर्यायप्रविभागमभिप्रैति स व्यवहाराभासस्तथा सति स्वार्थक्रियाहेतुत्वाभावप्रसङ्गाद् गगनाम्भोजवद् व्यवहारासत्यत्वे तदानुकूल्येन प्रमाणानां न प्रमाणता स्याद् यदुक्तम्—

व्यवहारानुकूल्येन प्रमाणाना प्रमाणता ।
नान्यथा बाध्यमानानां ज्ञानानां तत्प्रसङ्गतः ॥

इत्थमन्यथा स्वप्नादिविभ्रमानुकूल्येनापि ज्ञानानां तत्प्रसङ्गादिति । तथा ऋजु प्राञ्जलं वर्तमानक्षणमात्रं सूत्रयतीति ऋजुसूत्रमिति व्युत्पत्तेः 'पच्चुप्पन्नगाही उज्जुसुओ

णयविही इत्यागम', [अनुयोगद्वार ६०६], यथा 'सुखक्षण. सम्प्रत्यस्ति' इति पर्यायमात्रग्राहित्वादधिकरणभूतस्य द्रव्यस्य सतोऽप्यनर्पणादतीताऽनागतक्षणयोस्तु विनष्टानुत्पन्नत्वेनासम्भवान्नैवं लोकव्यवहारोच्छेदप्रसङ्गोऽस्य नयस्यैवं विषयमात्रप्ररूपणाल्लोकव्यवहारस्तु सकलनयसमूहसाध्य इति । योऽन्तर्वहि: सर्वथा द्रव्यं प्रतिक्षिपति पर्यायग्रहणादेव स तदाभासः प्रतिक्षण क्षणिकत्वाभिमानात् तथागतमतवदिति ।

कालकारकलिङ्गसख्यादिभेदाद्भिन्नमर्थं शपतीति शब्दो नय' शब्दप्रधानत्वात् । ततोऽपास्त वैयाकरणानां मतम् । ते हि 'धातुसम्बन्धे प्रत्ययाः' इति [पा० ३.४.१] सूत्रमारभ्य विश्वदृश्वास्य पुत्रो भवितेत्यत्र कालभेदेऽप्येकं पदार्थमादृत्य यो विश्वं द्रक्ष्यति सेऽस्य पुत्रो भवितेति भविष्यत्कालेनातीतकालस्य भेदाभिधानात् । तच्चानुपपन्नं कालभेदेऽप्यर्थभेदेऽतिप्रसङ्गात् । न खलु विश्वं दृष्टवान् विश्वदृश्वेति शब्दस्य योऽर्थः अतीतकालः स भवितेत्यस्याऽनागतकालो युक्त', पुत्रस्य भाविनोऽतीतत्वविरोधात् । अत्रातीतस्याप्यनागताध्यारोपादेकार्थत्वे तु न परमार्थत कालभेदेऽप्यभिन्नार्थव्यवस्था स्यात् । तथा करोति कटं देवदत्तस्तेन वा कटः क्रियतेऽत्राभिन्नमेवार्थं कारकभेदेऽप्याद्रियन्ते । तदसम्यक् तथा सत्यखिलकर्तृकर्मणोर्देवदत्तकटयोरभेदप्रसङ्गात्, तथा मुत्प्रमोद इत्यत्र लिङ्गभेदेऽपि हर्षार्थमेकमेवाद्रियन्ते तटीतटयोरेकार्थवत् तदसम्यक्, तथासति कुटीपटयोरप्यभेदप्रसङ्गात् । तथाऽऽपोऽम्भ इत्यत्र सङ्ख्याभेदेऽपि सलिलार्थमेकमेव मन्यन्ते सङ्ख्याभेदस्याभेदकत्वाद् गुर्वादिवत् तदपेशलं पटस्तन्तव इत्यत्राऽप्येकत्वानुषङ्गात् । आदिशब्दादुपसर्गादिभेदेऽप्यभेदं मन्यन्ते सन्तिष्ठते प्रतिष्ठत इत्यादौ धात्वर्थमात्रोद्योतकत्वादसम्यक्, तथासति तिष्ठति प्रतिष्ठत् इत्यादौ स्थितिगत्योरप्यभेदप्रसङ्गात् । ततः कालादिभेदाद् भिन्न एवार्थ' शब्दस्य नयो विवादापन्नो विभिन्नकालादिशब्दो विभिन्नार्थप्रतिपादको विभिन्नकालादिशब्दात् तादृशाऽपरशब्दवत् । तथासति हि लोकसंव्यवहारोच्छेदप्रसङ्गः शब्दनयाद, उच्छिद्यतां तावत्, तत्त्वं तु मीमांस्यते, न हि जात्युत्तरस्पृहानुवृद्धिः । कालादिभेदेन तमेवार्थं समर्थयमाणः शब्दाभास' ।

पर्यायशब्दभेदात् समेत्याभिमुख्येनार्थभेदं रूढः समभिरूढो, यथेन्द्र' शक्रः पुरन्दरः इत्यादय शब्दा विभिन्नार्थगोचरा विभिन्नशब्दत्वाद् वाजिवारणशब्दवदिति । 'वत्थूओ सकमण होइ अवत्थुं णये समभिरूढे' इत्यागमात् [अनुयोगद्वार ६०६] । तेष्वेव शब्देषु भिन्नाभिधेयतामाचक्षाण' तदाभासः ।

एवमित्थं विवक्षितक्रियापरिणमनभेदेन भूत परिणतमर्थं योऽभिप्रैति स एवम्भूतो नयः । समभिरूढैवंभूतयोरिदमन्तरम्—समभिरूढो हि गतिक्रियायां सत्यामस-

त्यां वा गोव्यपदेशं मन्यते रूढशब्दवत्, एवम्भूतस्तु गतिपरिणतिक्षण एव गच्छतीति गौर्ना स्थितिक्षणादौ। न चैवम्भूताभिप्रायेण कश्चिदक्रियाशब्दोऽस्ति यतो ह्याशुगाम्यश्व इत्यादिजातिशब्दानामपि क्रियाशब्दत्वात् तथा द्रव्यगुणसंयोगिसमवायिद्रव्यशब्दादीनामपि क्रियाशब्दत्वेनाध्यारोपात्। देवदत्त इति सङ्केतशब्दो द्रव्यशब्दः, तत्र देवा एन देयासुः, तथा शुचिभवनात् शुक्ल इति, तथा दण्डोऽस्यास्तीति दण्डीति विषाणमस्यास्तीति विषाणीति। पञ्चतयी तु शब्दानां प्रवृत्तिर्व्यवहारमात्रान्न निश्चयाच्च। 'वंजणअत्थतदुभए एवंभूतो विसेसेति'। तदिति व्यञ्जनं शब्दस्तस्यार्थस्तदुभयमयं विशेषयति यदुक्तम्—

गुणग्रामा विसंवादि नामापि महतां किल।
यथा सुवर्णश्रीखण्डरत्नाकरसुधाकराः ॥

क्रियाऽनाविष्टशब्दस्तु तदाभासः। तथा शब्दसमभिरूढैवम्भूताः परस्परं सध्रीचीना निरपेक्ष्या मिथ्यैवेति। तथैतेषु ऋजुसूत्रान्ताश्चत्वारोऽर्थमुख्यास्त्रयः शेषाः शब्दप्रधानाः प्रतिपत्तव्याः। तथैषां पूर्वः पूर्वो नयो बहुविषयः कारणभूतश्च, परः परोऽल्पविषयः कार्यभूतश्चेति। तत्र सत्यसतिसंकल्पत्वाद् भूमविषयत्वं नैगमस्य. सन्मात्रगोचरत्वात् तत्पूर्वकत्वात्, ततोऽणुविषयत्वं सङ्ग्रहस्य, सद्विशेषावबोधकत्वात्, ततोऽणुविषयत्वं व्यवहारस्य, वर्तमानसमयविषयत्वात्, ततोऽल्पत्वमृजुश्रुतस्य, कारककालादिभेदभिन्नविपरीतविषयत्वात्, ततोऽल्पत्वं शब्दस्य, पर्यायभेदेनार्थभेदप्रतिपद्यमानत्वात्, ततोऽल्पत्वं तत्पूर्वकस्य समभिरूढस्य, क्रियाभेदेनैव तद्विपर्ययात्, तत्पूर्वस्याप्यल्पविषयत्वं तत एवंभूतस्य, ततो यत्रोत्तर उत्तरो नयस्तत्र पूर्वः पूर्वाभ्यास्तस्ते च सहस्रसप्तशत्यादिवत्, यत्र तु प्राचीनो नयस्तत्र नार्वाचीननयप्रवृत्तिः प्रतिपनीपद्येत पञ्चशत्यादौ षट्शत्यादिवत्। तदित्थं नयार्थे विकलादेशे प्रमाणस्यापि साशवस्तुवेदिनो वृत्तिरविरुद्धा स्याद्वादशासनात्, न तु प्रमाणे नयानां वस्त्वंशमात्रवेदिना परवादिमतानुषङ्गवदिति मूलनयसप्तभङ्गी प्रमाणमलमयुक्तिप्रपञ्चेनेति।

यत्स्याद्वादसुधाब्धिरेव नयतारङ्गत्तरङ्गैरलं
भूष्णुर्ये नयभङ्गकल्पितमताकूपारपारङ्गमाः।
तान् शाखामृगवत् खशाखिशिखरारोहान्नभोलङ्घिनः
श्रद्धत्ते कतमस्ततो भवतु नः सम्यक् प्रमाणं जिनः॥
गच्छे श्रीमत्तपाख्येऽजनि रजनिकरस्पर्द्धिविस्फारकीर्तिः
श्रीमानानन्दमेरुस्त्रिभुवनजनतानन्दनातन्द्रचन्द्रः।

तच्छिष्यः **पद्ममेरुः** श्रुतसलिलनिधिः पारदृश्वा मितद्रुः
श्रौतस्मार्त्तागमानामसकलसकलब्रह्मवेदी विनेयः ॥

स तस्य **पद्मसुन्दरः प्रमाणसुन्दरं** व्यधात् ।
प्रमाणयन्तु कोविदा. प्रमाणिकामिमां गिरम् ॥ युग्मम् ॥

कराऽग्निजलधीन्दुके[1] नृपतिविक्रमादित्यतो
जगज्जनकृतोत्सवे प्रवरमाघमासे सिते ।
प्रमाणनयसुन्दरं जिनमताश्रितानन्दनं
समर्थमुनिभिर्वरं लिखितमाशु हर्षप्रदम् ॥

सर्वज्ञोदितहेतुयुक्तिनिकरै. स्याद्वादमुद्राङ्कितै-
र्जाग्रन्मोहमहाभरैकविलसन्मिथ्यादृशां यन्मतम् ।
तच्चानेकमहत्कदाग्रहजुषामेकान्तवादात्मकं
तूर्णं जीर्णपटीतटीव शतधा संभिद्यते तत्क्षणात् ॥

इति श्रीप्रमाणसुन्दरप्रकरणम् समाप्तमिदम् ॥



1. विक्रमसंवत १७३२

## [स्याद्वादसिद्धिः]

स्याद्वादवादामृतपानतोयैर्वादाहवेऽप्राप्यजरामरत्वम् ।
सूरीश्वरास्ते हरिभद्रमुख्या जयन्तु सद्बोधविजृम्भमाणाः ॥

पण्डितंमन्यान्यदर्शनिनैयायिक-बौद्ध-साङ्ख्यकापिलादिविजिगीषूणां स्याद्वादवादिनां जैनानामेव स्याद्वादज्ञानं सर्वज्ञानरहस्यभूतं त्रैलोक्यलोकाकलितवस्तूनां स्वरूपं समुज्जृम्भते सर्वत्र । अथातस्तल्लक्ष्यते—

एकस्मिन् वस्तुनि विरुद्धधर्मद्वयसमावेश. स्याद्वाद' । अथवा विरुद्धधर्मद्वयप्रतिपादनपरो वक्तुरभिप्रायविशेषः स्याद्वादः, अथवा वस्तुस्वरूपप्रतिपादनपरः श्रुतविकल्पः स्याद्वादः, अथवा एकैकस्मिन् वस्तुनि सप्रतिपक्षानेकधर्मस्वरूपप्रतिपादनपर. स्याद्वाद. ।

अथ प्रथमं लक्ष्यते—एकस्मिन् जीवाजीवादौ विरुद्धं यद् धर्मद्वयं नित्यानित्यास्तित्वनास्तित्वोपादेयानुपादेयाभिलाप्यानभिलाप्यादिलक्षणं, तस्य समावेश' समाश्रयः स्याद्वाद इत्यर्थः ।

अथ स्याद्वादमसहमाना परवादिनः प्रकटयन्ति—ननु भोः! अनेकन्यायशास्त्राध्ययनप्रवीणपराक्रमाः परमार्हताः! एकस्मिन् वस्तुनि नित्यानित्यभेदाभेदसत्त्वासत्त्व-सामान्यासामान्याभिलाप्यानभिलाप्याद्यात्मके मन्यमाने कथं न त्वन्मतेदुर्द्धरविरोधगन्धसिन्धुरधुरन्धरता स्याद्वादवादरणप्रगुणबलकुलोत्सर्पणाय प्रभवति शीतोष्णयोरिव सुखदु.खयोरिव शीतातपयोरिव परस्परसहानवस्थानलक्षणविरोधात् । दृश्यते च प्रत्यक्षप्रमाणसाहचर्यतर्ककर्कशसस्पर्शमात्रेण यत्र नित्यत्वं कथमनित्यत्वं, यद्यनित्यस्तर्हि कथं नित्यः, यदि सत्त्वं कथमसत्त्वादिरिति विरोधः स्पष्ट एवेति ।

यदि भेदस्याधिकरणं तर्ह्यभेदस्य न भवेद्, यथाऽभेदस्य तर्हि भेदस्य न स्यात् शीतोष्णस्पर्शवत् । न हि देवधूपदहनादिकं शीतं तदेवोष्णमुपलभ्यते, तथाप्रत्ययस्यासम्भवात् । अतो वैयधिकरण्य समापनीपद्येत ।

तथा च व्यतिकरनामदूषणं सगच्छते । तथाहि—येन रूपेण भेदस्तेनाभेदोऽपीति समर्थकदर्थनाद् व्यतिकर', परस्परविषयगमनं व्यतिकर इति तल्लक्षणात् ।

तथा च येन रूपेण भेदस्तेन वाऽभेदो येन वाऽभेदस्तेन भेद इत्यत्रापि भेदाभेदावपि प्रत्येकं भेदाभेदात्मकौ स्यातां, सर्वमनेकान्तात्मकमिति सिद्धान्तात् । तदा च तस्मिन् भेदाभेदे पुनस्तस्मिन् भेदाभेदपरिकल्पनया अनवस्थादौस्थ्यसस्थापनं सगच्छेत् । यदि न भेदाभेदौ प्रत्येकं भेदाभेदात्मकौ तदा सर्वमनेकान्तात्मकमिति सिद्धान्तो विरुद्ध्येत ।

तथा च केन हेतुना भेदः केन हेतुनाऽभेद इति संशयः ।

तथा भेदरूपमभेदरूपं वा दृष्टं वस्तु नाभ्युपगम्यते, अप्यदृष्टं वा भेदाभेदात्मकं परिकल्प्यत इति दृष्टहानिरदृष्टकल्पना च स्यात् ।

तथा चानेकधर्माश्रितवस्तुधर्मापेक्षया सर्वमनेकान्तात्मकं वस्तु, उत तन्निरपेक्षतया प्रत्येकं सर्वं वस्तु अनेकान्तात्मकमिति ? प्रथमपक्षे तु सिद्धसाध्यतादोषः । द्वितीयपक्षे तु विरोधादिदोषोद्भावनम् ॥

तथा च क्रमेण सर्वं वस्तु अनेकान्तात्मकमभ्युपगम्यते यौगपद्येन वा ? प्रथमपक्षे तु सिद्धसाध्यतादोषः । द्वितीयपक्षे तु विरुद्धादिदोषसम्भवः इति ।

तथा चानेकधर्मान् वस्तु किमेकेन स्वभावेन नानास्वभावै[र्वा] व्याप्नुयादिति ? यदि वस्तु एकेन स्वभावेन व्याप्नोति तदानेकधर्मणामैक्यं स्यात् । अथ नानास्वभावै-र्व्याप्नोति [इति] चेत् तदा वस्तुनोऽपि नानात्वं स्यात्, तदाश्रितानां धर्माणां भिन्नस्व भावानां तदाश्रयत्वेन भेदहेतुत्वाद्, 'अयमेव भेदो भेदहेतुर्वा यदुत भिन्नस्वभावधर्मा-ध्यासः भेदकारणम्' इति वचनात्[1] ॥

किञ्च, सर्ववस्तुनि अनेकान्तात्मकेऽभ्युपगम्यमाने जलादेरपि अनलादिप्रसक्तिः स्यादनलादेर्वा जलादिप्रसक्तिर्भवेत् । किञ्च, जलाद्यर्थिनो नरस्य जलादौ प्रवृत्तिर्न सम्भवेदनलाद्यर्थिनश्चानलादौ प्रवृत्तिर्न संवोभूयात्, किन्तु अनलाद्यर्थिनो जलादौ प्रवृत्तिर्घटामटाट्येत जलाद्यर्थिनोऽनलादौ प्रवृत्तिः समजाघटयत इत्यन्योऽन्यविरुद्ध-धर्मस्य सद्भावसमानत्वात् । जलादेरनेकान्तात्मकं वस्त्विति तद्विरुद्धानलादीना-मपि सुतरामाशङ्कनीयानामभ्युपगमाच्च । तथा च जलाद्यर्थिनोऽप्यनेकान्तात्मकं वस्त्विति मन्यमानः सशयाज्जलेऽनले वा प्रवृत्तस्य विवक्षितार्थक्रियाकारित्वाभावान्मू-लत प्रवृत्तिरेव न सम्भवीति, 'संशयात्मा क्षयं व्रजेत्' इति सन्मतिवचनात् । को हि नाम विवक्षितार्थक्रियाकारि रूपमनुपलभमानो विवक्षितार्थक्रियार्थी तत्र प्रवर्त्तेत । किन्तु विवक्षितार्थे विवक्षितार्थक्रियाकारिण्येव विवक्षितार्थक्रियार्थिनः प्रवृत्तिर्दरीदृश्यत इति ॥

तथा च प्रमाणमप्यप्रमाण भवेत् । अप्रमाणं वा प्रमाणमपि भवेत् । तदा च सर्वजनप्रसिद्धप्रमाणाप्रमाणव्यवहारविलोप स्यात् ॥

तथा च भवन्मते सर्वज्ञोऽप्यसर्वज्ञः कथ न सम्भवेदनेकान्तात्मकवस्त्वभ्युपग-मात् ॥

---

[1] तुलना-'अयं हि भेदो भेदहेतुर्वा विरुद्धधर्माध्यासः कारणभेदश्च ।' हेतुबिन्दुटीका पृ ८७ ।

पुनश्च सिद्धस्याप्यसिद्धत्वं स्यात् ।

तथा च येन प्रमाणेन सर्वस्यानेकान्तत्वं साध्यते तस्य प्रमाणस्यानेकान्तात्मत्वात् कुतस्तत्सिद्धिः ? यद्यपि यथाकथञ्चित् सिद्धे स्वतो वा परतो वा ? यदि स्वतस्तर्हि किं प्रमाणपरिकल्पनया ? अथ परतस्तर्हि अनवस्थादौस्थ्य च।

तथा च, कर्म अन्येन कृतमन्येन भुक्तमित्यपि कथं न घटामटाट्येत भवन्मते सर्वस्याप्यनेकान्तात्मकताङ्गीकारात् ।

किञ्च, प्रकरणसमावतारस्यापि दुर्निवारत्वात् । तत्प्रयोगश्च—भेदाभेदादिकौ नैकाधिकरणसमानाधिकरणौ विरुद्धधर्मिद्वयधर्मवत्त्वात् शीतोष्णस्पर्शवदिति । यत्र यत्र परस्परविरुद्धधर्मिद्वयधर्मवत्त्वं तत्र तत्र नैकाधिकरणे विरुद्धधर्मिद्वयमामान्याधिकरण्यं यथा रक्तः घटो न नील', तथा चेदम् तस्मात्तथेति । तस्मात् सिद्धं नः समीहितम्—एकान्तरूपं वस्त्विति ॥

अथ प्रज्ञापयन्ति सकलप्रज्ञालचक्रवालशिरोमणिकल्पाः स्याद्वादितल्पाः । अतुच्छस्वच्छमतिप्रकरप्रकारोल्लासोच्छ्वसितयुक्तिशक्तिप्रबलवात्यापात्यायुधोन्क्षिप्तकुमतिमतिप्रचारवनगहनपवनानामस्माकमग्रे कतिपयतर्कविचारवतो भवतोऽतुलप्रबलशृङ्खलानिगडितपदोत्प्लवनाभ्यसन वरीवर्ति यतोऽस्माभिरेकेनैव हि रूपेण भेदाभेदयोरभिधाने विरोधः सिद्ध्येत् । न चैवेत्थं प्रतिपाद्यते येन विरोधादीना सिद्धिः प्रसिद्ध्यतीति । न चैव जैनानां स्याद्वादवादोऽभीष्ट इति वाच्यम् । नैयायिकादीनामपि प्रत्यक्षानुमानागमयुक्तिसाध्यमक्षरान्तरैराख्यातं स्याद्वादं मन्यमानानां स्याद्वादगजो न कथं प्रसर्पतीति । तथाहि — सकलशास्त्रे पक्षद्वयं जातिपक्षो व्यक्तिपक्षश्च, तत्र जाति. सामान्यं, व्यक्तिरत्र विशेष इति वचनात्, सामान्ये तु सर्वेषामेव नित्यत्वं सत्ताप्रतिपादनपरत्वाद् यथा गोत्वाश्वत्वादिक नित्यम्, न तु गौरश्वो वा नित्यः । व्यक्तिपक्षे त्वनित्यमेव । य एव जातिपक्षः स एवास्माकं जैनानां द्रव्यार्थिकनयः । यो व्यक्तिपक्षः स एवास्माकं पर्यायार्थिकनयः । ताभ्यां नित्यानित्यत्व च समादध्मः । यद् आह अस्मदागमः–'जीवा सिय सासया सिय असासया गोयमा ! दव्वट्ठआए सासया भावट्ठयाए असासया' इति [भगवती ७. २. २३] । ननु शृणुत भो नैयायिकादयः ! भवन्मतेऽपि पदार्थास्ते नित्यानित्याश्च विचार्यमाणाः सपश्यन्ते । तथाहि—पृथिव्यप्तेजोवायुनां नित्यानित्यत्वं न्यायशास्त्रे, कार्यरूपमनित्य परमाणुरूपं नित्यमिति वचनात् सुप्रसिद्धमेव । अन्यथा 'अप्रच्युतानुत्पन्नस्थिरैकरूपनि(पं नि)-त्यम्' इति लक्षणेन नित्यस्य सर्वस्यैक्यरूपत्वेन सर्वदा सत्त्वप्रसङ्गः । आकाश-

काल-दिशामपि नित्यानित्यत्वं प्रत्यक्षप्रसिद्धमेव, घटाकाशो नष्टः पटाकाशो नष्ट इति प्रतीते. । आत्माऽपि तव मते [नित्यानित्य.], स च देहेन्द्रियव्यतिरिक्तः विभुर्नित्यश्चेति वचनात्, तक्रकौडिन्यन्यायेन पारिशिष्यानुमानेन देहाश्रितोऽनित्य एवेति । मनसोऽपि [नित्यानित्यत्वमेव] सकलदेहव्यापित्वाद्, देहस्यानित्यत्वाद् आश्रयनाशे सत्याश्रयिणोऽपि नाश इति न्यायात् अनित्यमेव; अभावोऽपि [नित्यानित्य] एव । अनादि-सान्त. प्रागभाव', सादिरनन्त. प्रध्वंसाभावः, अनादिरनन्तोऽत्यन्ताभाव', अनादिनित्य. संसर्गाभावोऽन्योऽन्याभाव. इति नित्यानित्य. स्पष्ट इति । ननु भो. ! आकाशादिपञ्चकं नित्यम्, अपरं नित्यानित्यमिति सप्तपदार्थविवरणे प्रतिपादितत्वात् । भवता तु नवानामपि पदार्थानां नित्यानित्यत्वमुक्तमतस्त्वद्वचनेन सह विरोध । तथाहि—आकाश-काल-दिगात्मपञ्चकं नित्यं विनाशराहित्यमिति यावत्, प्रयोगश्चाकाशादिपञ्चकं नित्य, निरवयवद्रव्यत्वात् परमाणुवदिति । अत्रोच्यते सत्ताविनाशाभावापेक्षया नित्यत्वम्, उपाधिभेदेन घटाकाशो व्यक्तिरूपो नष्ट इति आबालगोपालं(ल)प्रतीते' । सत्त्वादनित्यत्वं परमाणोर्दृष्टान्तत्वेन व्यक्तिकृतत्वात्, यथा परमाणौ द्व्यणुक-त्र्यणुक-चतुरणुकतयोत्पद्यमाने परमाणुव्यक्तिर्नष्टा, न तु परमाणुर्नष्ट इति । अतो जात्या(त्य)पेक्षया सर्वं नित्यं व्यक्त्यपेक्षया त्वनित्यमिति तदेवाक्षरान्तरैराख्यातम् । द्रव्यार्थिक पर्यायार्थिक नयद्वयं जैनमतसंमतमेवागतम् । भावार्थस्त्वयं कुत्रचिन्मुख्यवृत्त्या गौणतया वा नित्यानित्यभेदादिकं व्यवस्थित यथा सामान्यं तद् द्विविधम्—जातिरूपम् उपाधिरूपं च । जाति. सामान्यं सार्वदेशिकं वस्तु स्वाभाविकम् । उपाधिरूपं पाचकत्वम् । इदं त्वनुवृत्तिप्रत्ययहेतुत्वेन सबाधकत्वाच्चोपाधिरूपं मुख्यार्थबाधे उपाधिरिति । तद्वत् सर्वं योज्यमिति ।

*

## LALBHAI DALPATBHAI BHARATIYA SANSKRITI VIDYA MANDIR
## L D SERIES

| *S NO* | *Title* | *Price Rs.* |
|---|---|---|
| *1. | Śivāditya's Saptapadārthī, with a Commentary by Jinavardhana Sūri Editor Dr J S. Jetly (Publication year 1963) | 4/- |
| 2. | Catalogue of Sanskrit and Prakrit Manuscripts Munirāja Shri Punyavijayaji's Collection Pt I Compiler . Munirāja Shri Punyavijayaji Editor : Pt Ambalal P. Shah (1963) | 50/- |
| 3 | Vinayacandra's Kāvyaśikṣā Editor : Dr H G Shastri (1964) | 10/- |
| 4 | Haribhadrasūri's Yogaśataka, with auto-commentary, along with his Brahmasiddhāntasamuccaya. Editor Munirāja Shri Punyavijayaji (1965) | 5/- |
| 5 | Catalogue of Sanskrit and Prakrit Manuscripts, Munirāja Shri Punyavijayaji's Collection, pt II Compiler Munirāja Shri Punyavijayaji Editor : Pt A P Shah (1965) | 40/- |
| 6. | Ratnaprabhasūri's Ratnākarāvatārikā, part I Editor : Pt. Dalsukh Malvania. (1965) | 8/- |
| *7 | Jayadeva's Gitagovinda, with King Mānāṅka's Commentary. Editor Dr. V M Kulkarni. (1965) | 8/- |
| 8 | Kavi Lāvanyasamaya's Nemirangaratnākarachanda. Editor Dr S Jesalpura (1965) | 6/- |
| 9. | The Nāṭyadarpana of Rāmacandra and Gunacandra : A Critical study By Dr K. H. Trivedi (1966) | 30/- |
| 10 | Ācārya Jinabhadra's Viśesāvaśyakabhāsya, with Auto-commentary, pt. I Editor . Dalsukh Malvania (1966) | 15/- |
| 11. | Akalanka's Criticism of Dharmakirti's Philosophy A study By Dr Nagin J Shah. (1967) | 30/- |
| 12 | Jinamānikyagani's Ratnākarāvatārikādyaślokaśatārthī. Editor . Pt Bechardas J. Doshi (1967) | 8/- |
| 13 | Ācārya Malayagiri's Śabdānuśāsana Editor . Pt. Bechardas (1967) | 30/- |
| 14. | Ācārya Jinabhadra's Viśesāvaśyakabhāsya, with Auto-commentary. pt. II. Editor Pt. Dalsukh Malvania (1968) | 20/- |
| 15. | Catalouge of Sanskrit and Prakrit. Manuscripts . Munirāja Punyavijayaji's Collection. Pt III. Compiler . Munirāja Shri Punyavijayaji Editor Pt. A. P Shah (1968) | 30/- |

*Out of print.

16. Ratnaprabhasūri's Ratnākarāvatārikā, pt. II, Editor . Pt. Dalsukh Malvania (1968) 10/-
17 Kalpalatāviveka (by an anonymous writer) Editor . Dr Murari Lal Nagar and Pt Harishankar Shastry. (1968) 32/-
18. Āc Hemacandra's Nighantuśesa, with a commentary of Śrivallabhagani. Editor : Muniraja Shri Punyavijayaji (1968) 30/-
19 The Yogabindu of Ācārya Haribhadrasūri with an English Translation, Notes and Introduction by Dr. K K. Dixit (1968) 10/-
20 Catalogue of Sanskrit and Prakrit Manuscripts : Shri Āc Devasūri's Collection and Āc Ksāntisūri's Collection : part IV Compiler . Muniraja Shri Punyavijayaji Editor . Pt A P. Shah, (1968) 40/-
21 Ācārya Jinabhadra's Viśesāvaśyakabhāsya, with Auto-Commentary, pt III Editor · Pt. Dalsukh Malvania and Pt. Bechardas Doshi (1968) 21/-
22 The Śāstravārtāsamuccaya of Ācārya Haribhadrasūri with Hindi Translation, notes and Introduction by Dr K K. Dixit (1969) 20/-
23. Pallipāla Dhanapāla's Tilakamañjarisāra Editor Prof N. M Kansara (1969) 12/-
24 Ratnaprabhasūri's Ratnākarāvatārikā pt III. Editor Pt. Dalsukh Malvania (1969) 8/-
25. Āc Haribhadra's Neminābacariu P tI · Editor : Shri M C. Modi and Dr. H C Bhayani (1970) 40/-
26 A Critical Study of Mahāpurāna of Puspadanta. (A Critical Study of the Deśya and Rare words from Puspadanta's Mahāpurāna and His other Apabhramśa work) By Dr Smt. Ratna Shriyan. (1970) 30/-
27. Haribhadra's Yogadrstisamuccaya with English translation, Notes, Introduction by Dr K. K Dixit. (1970) 8/-
28. Dictionary of Prakrit Proper Names, Part I by Dr M. L Mehta and Dr K. R Chandra. (1970) 32/-
29. Pramānavārtikabhāsya Kārikārdhapādasūci. Compiled by Pt. Rupendrakumar (1970) 8/-
30 Prakrit Jaina Kathā Sāhitya by Dr. J C Jain (1971) 10/-
31. Jaina Ontology By K. K Dixit (1971) 30/-
32 Philosophy of Shri Svaminarayan by Dr. J. A Yajnik (1972) 30/-
33. Āc Haribhadra's Neminābacariu pt II Editors : Prof. H. C. Bhayani and M C Modi. (1972) 40/-
34 Up Harsavardhana's Adhyātmabindu : Editors · Muni Shri Mitranandvijayaji and Dr Nagin J. Shah. (1972) 6/-
35 Cakradhara's Nyāyamañjarigranthibhanga Editor Dr. Nagin J. Shah (1972) 36/-

## Terms Regarding Sale

( in force from 1st April 1971 )

1. Book-seller shall ordinarily receive a discount of 25% on all the publications of L D. Series
2. The Railway frieght and cost of packing shall not be charged from those placing at a time an order amounting to Rs 1,000 or more
3. Those whose purchase for full one year (1st April to 31st March) amount to Rs 5,000 or more shall at the end of the year get an additional discount of 5% while those whose purchases for that period amount to Rs. 10,000/- or more shall get an additional discount of 10% over and above the discount mentioned in rule 1 above. This amount will not be paid in cash but will be adjusted against the bill or bills of the next year.
4. The payment should be made within a month after presentation of the bill.

## विक्री के नियम

( १ अप्रैल १९७१ से )

१. पुस्तक-विक्रेताओं को ला. द ग्रन्थमाला (L D Series) के प्रकाशनों पर साधारणत. २५ प्रतिशत कमीशन दिया जायगा ।

२ १,००० रु० या इससे अधिक के एककालिक आर्डर पर रेलभाड़ा तथा पैकिंग नहीं लिया जायगा ।

३. वर्ष भर ( १ अप्रैल से ३१ मार्च ) में ५,००० रु० या इससे अधिक की पुस्तकें खरीदने पर नियम १ में उल्लिखित कमीशन के अतिरिक्त ५ प्रतिशत अधिक और १०,००० रु० या इससे अधिक की पुस्तकें खरीदने पर १० प्रतिशत अधिक कमीशन वर्ष के अन्त में दिया जायगा । इस कमीशन की रकम नगद नहीं दी जायगी किन्तु आगामी वर्ष के बिल या बिलों में से काट दी जायगी ।

४. बिल भेजने के बाद एक मास की अवधि में पेमेन्ट हो जाना चाहिए ।